व
~~१०५~~
५ अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ विना भुक्तं न क्षीयन्ते कोटि कर्म शतै रपि

और जिसने यज्ञादिक द्वारा कर्म निष्काम पूर्वक करके श्रवणादिक द्वारा ज्ञान प्राप्त कर लिया है उसके सम्पूर्ण कर्म ज्ञानाग्नि से दग्ध हो कर भूने हुये बीजों के सदृश जमते नहीं अर्थात अपना फल नहीं देते

---

यत्र विश्व मिदं भाति कल्पितं रज्जु सर्पवत्
आनंद परमानंदः स बोध स्त्वं सुखं चर







# अथ पञ्चदशी सटीक ॥

---

नमःश्रीशङ्करानन्दगुरुपादांबुजन्मने ॥
सविलासमहामोहग्राहग्रासैककर्म्मणे १

नत्वाश्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥ प्रत्यक्तत्वविवेकस्य क्रियतेपददीपिका १ प्रारिप्सितस्य ग्रंथस्याविघ्नेन परिसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिप्राप्तमिष्टदेवतागुरुनमस्कारलक्षणं मंगलाचरणं स्वेनानुष्ठितं शिष्यशिक्षार्थं श्लोकेनोपनिवध्नाति अर्थाद्विषयप्रयोजने सूचयति नमइति शंसुखंकरोतीतिशङ्करः सकलजगदानन्दकरः परमात्माएषह्येवानन्दयतीति श्रुतेः आनन्दः निरतिशयप्रेमास्पदत्वेन परमानन्दरूपः प्रत्यगात्मा शंकरश्चासावानन्दश्चेति शङ्करानन्दः प्रत्यगभिन्नः परमात्मा सएवगुरुः परिपक्वमलानेतानुत्सादनशक्तिपातेन योजयतिपरेतत्वेसदीक्षयाचार्यमूर्त्तिस्थइत्यागमात् श्रीमांश्चासौशङ्करानन्दगुरुश्चेति गन्धद्विप इत्यादिवत्समासः अनेनश्रीगुरोरणिमाद्यैश्वर्यसंपन्नत्वं सूचितं यद्वा श्रियाभूत्या शंकरोतीतिश्रीशंकरः रातेर्दातुः परायणमितिश्रुतेः अनेनश्रीगुरोर्भक्तेष्टसंपादने सामर्थ्यं सूचितं भवति अस्यगुरोः पादावेवाम्बुजन्मकमलंतस्मैनमःप्रह्वीभावोस्तु किंविधायसविलासमहामोहग्राहग्रासैककर्म्मणे विलासः कार्यवर्गस्तेनसहवर्ततइति सविलासः महामोहोमूलज्ञानं सएवग्राहः मकरादिवत्स्ववशं प्राप्तस्यातीवदुःखहेतुत्वात् तस्यग्रासोग्रसनं निवर्त्तनं सएवैकं मुख्यं कर्म्मव्यापारोयस्य तत्तथा तस्माइ

त्यर्थः अत्रचशंकरानन्दपदद्वयसामानाधिकरण्येन जीवब्रह्मणोरेकत्वलक्षणोविषयः जीवस्य भूमब्रह्मरूपतयाऽपरिच्छिन्नसुखाविर्भावलक्षणं प्रयोजनं चसूचितं सविलासेत्यादिना निःशेषानर्थनिवृत्तिलक्षणं प्रयोजनं मुखतएवाभिहितम् १ ॥

तत्पादांबुरुहद्वन्द्वसेवानिर्मलचेतसाम् ॥
सुखबोधायतत्वस्य विवेकोयंविधीयते २

इदानीमवांतरप्रयोजनकथनपुरःसरं ग्रन्थारम्भंप्रतिजानीते तत्पादेति तस्यगुरोःपादावेवांबुरुहेकमले तयोर्द्वन्द्वं तस्यसेवयापरिचर्य्यया स्तुतिनमस्कारादिलक्षणयानिर्मलं रागादिरहितं चेतोन्तःकरणं येषांतेतथोक्तास्तेषां सुखबोधायानायासेन तत्वज्ञानोत्पादनायायंवक्ष्यमाणप्रकारस्य तत्वस्यानारोपितस्वरूपस्य अखण्डसच्चिदानन्दं महावाक्येनलक्ष्यत इतिवक्ष्यमाणो योविवेकआरोपितात्पञ्चकोशादिलक्षणाज्जगतो विवेचनं विधीयते क्रियत इत्यर्थः २ ॥

शब्दस्पर्शादयोवेद्या वैचित्र्याज्जागरेपृथक् ॥
ततोविभक्तातत्संविदैकरूप्यान्नभिद्यते ३

जीवब्रह्मणोरेकत्वलक्षणविषयसंभावनाय जीवस्य सत्यज्ञानादिरूपताम् दिदर्शयिषुरादौज्ञानस्याभेदप्रतिपादनेन नित्यत्वंसाधयति शब्दस्पर्शादय इत्यादिना तत्रतावद्विस्पष्टव्यवहारावतिजागरेज्ञानस्याभेदंसाधयति शब्देति जागरेन्द्रियैरर्थोपलब्धिर्जागरितमित्युक्तलक्षणेऽवस्थाविशेषे वेद्याः संविद्विषयभूताः शब्दस्पर्शादयआकाशादिगुणत्वेन प्रसिद्धास्तदाधारत्वेन प्रसिद्धाआकाशादयश्च वैचित्र्यात्परस्परंगवाश्वादिवद्वैलक्षण्योपेतत्वात् पृथक् परस्परंभिद्यंते ततस्तेभ्योविभक्तावुद्ध्याविवेचितातत्संवित्तेषां शब्दादीनां संविद्ज्ञानंऐकरूप्यात्संवित्संविदित्येकाकारेणावभासमानत्वाद्गगनमिवनाभिद्यते अत्रायंप्रयोगः विवादाध्यासितासंवित्स्वाभाविकभेदशून्याउपाधिपरामर्शमंतरेणाविभाव्यमानभेदत्वाद्गगनवत् शब्दसंवित्स्पर्शसंविदो न भिद्यते सं

वित्वात्स्पर्शसंविद्वदिति एकस्या एवसंविदोगगनस्यैवौपाधिकभेदेनापि भिन्नव्यवहारोपपत्तौ वास्तवभेदकल्पनायां गौरवंवाधकमुन्नेयम् ३ ॥

तथास्वप्नेऽत्रवेद्यंतु नस्थिरंजागरेस्थिरम् ॥
तद्भेदोतस्तयोःसंविदेकरूपानभिद्यते ४

उक्तन्यायंस्वप्नेप्यतिदिशति तथेति यथाजागरणेवैचित्र्याद्विषयाणांभेद ऐकरूप्यात्संविदोऽभेदश्च तथातेनैव प्रकारेणस्वप्नेकरणेषूपसंहृतेषु जागरित संस्कारजः प्रत्ययःसविषयः स्वप्नइत्युक्तलक्षणायां स्वप्नावस्थायामपि विषया एवाभिन्नाः नसंविदिति ननुयदिस्वप्नजागरयोरेकाकारता विषयतत्संविदोर्भे दाभेदाभ्यां तर्हिस्वप्नो जागरइति भेदव्यवहारः किंनिमित्तकइत्याशंक्याह अत्रवेद्यंत्विति अत्रस्वप्नेवेद्यंपरिदृश्यमानं वस्तुजातंनस्थिरं नस्थायिप्रती तिमात्रशरीरत्वाज्जागरेतु परिदृश्यमानंवस्तुजातंस्थिरं स्थायिकालांतरेपि द्रष्टुंयोग्यत्वादतः स्थिरास्थिरविषयत्वलक्षणवैलक्षण्यात्तद्भेदस्तयोः स्वप्न जागरयोर्भेदइत्यर्थः ननुस्वप्नजागरयोर्भेदश्चेत्तत्संविदोरपिभेदः स्यादित्याशं क्याह तयोरिति एकरूपेतिहेतुगर्भविशेषणम् ४ ॥

सुप्तोत्थितस्यसौषुप्ततमोवोधोभवेत्स्मृतिः ॥
साचावबुद्धविषयाऽवबुद्धंतत्तदाततः ५

एवमवस्थाद्वये ज्ञानस्यैकत्वं प्रसाध्य सुषुप्तिकालीनस्यापि तस्यतेनैक्यप्र साधनाय तत्र तावद्ज्ञानंसाधयति सुप्तेति सुप्तउत्थितः सुप्तोत्थितः सुप्तंसुषुप्ति स्तस्माद्उत्थितंइति वा तस्यसौषुप्ततमोवोधः सुषुप्तिकालीनस्य तमसोऽज्ञान स्ययोवोधोज्ञानमस्ति नकिंचिदवेदिषमिति सास्मृतिरेव भवेन्नानुभवस्तस्का रणस्येंद्रियसन्निकर्षव्याप्तिलिंगादेरभावादितिभावः ततः किंतत्राह साचेति साचस्मृतिरववुद्धविषयाऽववुद्धोऽनुभूतो विषयोयस्याःसातथोक्ता यास्मृतिः सानुभवपूर्वकेतिव्याप्तिर्लोके दृष्टेतिभावः ततोपिकिंतत्राह अववुद्धमिति त तस्तस्मात्कारणात् तत्सौषुप्तंतमस्तदा सुप्तौ अववुद्धमनुभूतमित्यवगंतव्यं अत्रायंप्रयोगः विमतंनकिंचिदवेदिषमिति ज्ञानंअनुभवपूर्वकं भवितुमर्हति स्मृतित्वात्सामेमातेतिस्मृतिवदिति ५ ॥

सबोधोविषयाद्भिन्नो नबोधात्स्वप्नबोधवत् ॥
एवंस्थानत्रयेप्येका संवित्तद्वद्दिनांतरे ६
मासाब्दयुगकल्पेषुगतागम्येष्वनेकधा ॥
नोदेतिनास्तमेत्येका संविदेषास्वयंप्रभा ७

तस्यानुभवस्यस्वविषयादज्ञानाद्भेदंबोधांतरादभेदंचाह सबोधइति स बोधः सौषुप्ताज्ञानानुभवः विषयादज्ञानाद्भिन्नः पृथग्भवितुमर्हतिबोधत्वात् घटबोधवत् बोधांतरान्नभिद्यते बोधत्वात्स्वप्नबोधवत् फलितंकथयन्नुक्तन्या यमन्यत्राप्यतिदिशति एवमित्यादिना स्थानत्रयेपिएकदिनवर्तिजाग्रदाद्य वस्थात्रयेपिसंविदेकैव सर्ववाक्यंसावधारणमिति न्यायात्तद्वद्दिनांतरइति य थैकस्मिन्दिवसेऽवस्थात्रयेपि ज्ञानस्याभेदएवमन्यस्मिन्नपि दिवसेऽनेकधा नेकप्रकारेण गतागम्येष्वतीतागामिषु मासेषुचैत्रादिषु अब्देषुप्रभवादिषु युगेषु कृतादिषु कल्पेषु ब्रह्मादिषु च ज्ञानस्याभेदएवेत्यर्थः संविदएकत्व समर्थनेफलमाह नोदेतीति यतःसंविदेकाऽतोनोदेतिनोत्पद्यते नास्तमेति नविनश्यतिच असाक्षिकयोरुत्पत्तिविनाशयोरसिद्धेः स्वोत्पत्तिविनाशयो स्तयैव संविदाग्रहीतुमशक्यत्वात्संविदन्तराभावाच्चेति भावः ननु संविदन्तरा भावे ग्राहकाभावादस्याप्यभाने जगदांध्यंप्रसज्येतेत्यतआहएषेति अत्रायं प्रयोगः संवित्स्वयंप्रकाशा अवेद्यत्वेसत्यपरोक्षत्वाद्व्यतिरेके घटवन्नचायंवि शेषणासिद्धोहेतुः संविदः स्वसंवेद्यत्वेकर्मकर्तृत्वविरोधात्परवेद्यत्वेऽनवस्था नादतः स्वप्रकाशत्वेनभासमानायाः संविदः सर्वावभासकत्वसम्भवान्नज गदांध्यप्रसंगइति भावः ६ । ७ ॥

इयमात्मापरानन्दः परप्रेमास्पदंयतः ॥
मानभूवंहिभूयासमितिप्रेमात्मनीक्ष्यते ८

भवत्वेवंसंविदोनित्यत्वंस्वप्रकाशत्वंचततः किमित्यत्राह इयमिति अत्रा र्थंप्रयोगः इयंसंविदात्माभवितुमर्हतिनित्यत्वेसति स्वप्रकाशत्वाद्यत्रैवंनत देवं यथाघटइतिआत्मनो नित्यसंविद्रूपत्वप्रसाधनेन सत्यत्वमपिसाधितं भ

वति नित्यत्वातिरिक्तसत्यत्वाभावात् नित्यत्वं सत्यत्वं तद्यस्यास्ति तन्नित्यं सत्यमिति वाचस्पतिमिश्रैरुक्तत्वादितिभावः आत्मन आनन्दरूपत्वंसाधयति परानन्दइति आत्मेत्यनुषज्यतेपरश्चासावानन्दश्चपरानन्दः निरतिशय सुखस्वरूपइत्यर्थः तत्रहेतुमाह परेतियतोयस्मात्कारणात्परस्य निरुपाधिकत्वे ननिरतिशयस्यप्रेम्णः स्नेहस्य आस्पदंविषयस्तस्मादत्रेदमनुमानमात्मापरमानन्दरूपः परप्रेमास्पदत्वाद्यः परमानन्दरूपोनभवति नासौपरप्रेमास्पदमपियथाघटोनतथाचायं परप्रेमास्पदंनभवतीति नतस्मात्परमानन्दरूपोनभवतीति नन्वात्मनिधिक्कामिति द्वेषस्योपलभ्यमानत्वात्प्रेमास्पदत्वमेवासिद्धं कुतः परप्रेमास्पदत्वमित्याशंक्यतस्यदुःखसम्बन्धनिमित्तकत्वेनान्यथासिद्धत्वात्प्रेम्णश्चात्मन्यनुभवसिद्धत्वान्नैवमितिपरिहरति मानभूवमिति हियस्मात्कारणादात्मनि विषयेमानभूवमहंमाभूवमितिनममासत्वं कदापिमाभूत्किंतुभूयासमेवसदासत्वमेवममभूयादित्येवं विधं प्रेमेक्ष्यतेसर्वैरनुभूयतेअतोनासिद्धिरित्यर्थः ८ ॥

तत्प्रेमात्मार्थमन्यत्रनैवमन्यार्थमात्मनि ॥
अतस्तत्परमंतेनपरमानन्दतात्मनः ९
इत्थंसच्चित्परानन्दआत्मायुक्त्यातथाविधम् ॥
परंब्रह्मतयोश्चैक्यंश्रुत्यंतेषूपदिश्यते १०

माभूत्स्वरूपासिद्धिः प्रेम्णःपरत्वेमानाभावाद्विशेषणासिद्धिर्हेतोरित्याशंक्याहतत्प्रेमेति अन्यत्रस्वातिरिक्तेपुत्रादौयत्प्रेमतदात्मार्थं तेषामात्मशेषत्वनिमित्तकमेवनस्वाभाविकमेवमात्मनिविद्यमानं प्रेमान्यार्थंनात्मनोऽन्यशेषत्वनिमित्तकं नभवतिकिंत्वात्मत्वनिमित्तकमेवातो निरुपाधिकत्वात्तत्परमं निरतिशयं फलितमाहतेनेति तेननिरतिशयप्रेमास्पदत्वेनात्मनः परमानंदतानिरतिशयसुखस्वरूपत्वंसिद्धंएतैःसप्तभिःश्लोकैः प्रतिपादितमर्थंसंक्षिप्य दर्शयति इत्थमिति शब्दस्पर्शादयइत्यादिनाज्ञानस्यनित्यत्वं प्रसाध्यतस्यैवेयमात्मेत्यात्मप्रसाधनेनात्मनः सच्चिद्रूपत्वंसाधितं परानन्दइत्यादिनाचपरमानन्दरूपत्वं समर्थितमतआत्मामहावाक्येत्वंपदार्थः सच्चिदानन्दरूपःसि

द्धः नन्वुक्तलक्षणस्यात्मनोयुक्त्यैवावगतावुपनिषदांनिर्विषयत्वेनाप्रामाण्यप्र संगइत्याशंक्याह तथाविधमिति तथातादृग्विधाप्रकारोयस्यतत्तथाविधंसच्चि दानन्दरूपं परंब्रह्मतत्पदार्थस्तयोस्तत्वं पदार्थयोरैक्यमखंडैकरसत्वं च श्रुत्यंते षुवेदांतेषूपदिश्यतेप्रतिपाद्यतेऽतोनवेदांतानांनिर्विषयत्वमित्यर्थः ६ । १० ॥

अभानेनपरंप्रेमभानेनविषयेस्पृहा ॥
अतोभानेप्यभाताऽसौपरमानंदतात्मनः ११

आत्मनःपरमानन्दरूपत्वमाक्षिपति अभानइति परमानन्दरूपत्वं नभा सते भासतेवाअभानेऽप्रतीतौ नपरंप्रेमात्मनि निरतिशयस्नेहोनस्याद्विषय सौंदर्यज्ञानजन्यत्वात्स्नेहस्य भानेप्रतीतौतुविषयें सुखसाधनेस्रगादौ तज्ज न्येसुखेवास्पृहा इच्छानस्यात्फलप्राप्तौ सत्यांसाधनेच्छानुपपत्तेः नित्यनिरति शयानन्दलाभेसति क्षणिकेसाधनपारतंत्र्यादिदोषदूषिते वैषयिकेसुखेस्पृहा ऽयोगाच्च तस्मान्नानन्दरूपतात्मनउपपन्नेति प्रकारान्तरस्यात्र सम्भवात्मैव मितिपरिहरति अतइति यतोभानाभानपक्षयोरुभयोरपिदोषोस्त्यतःकारणा दात्मनोऽसौपरमानन्दताभानेपि प्रतीतौसत्यामपिअभातानप्रतीताभवति११

अध्येतृवर्गमध्यस्थपुत्राध्ययनशब्दवत् ॥
भानेप्यभानंभानस्य प्रतिबंधेनयुज्यते १२
प्रतिबन्धोस्तिभातीति व्यवहारार्हवस्तुनि ॥
तंनिरस्यविरुद्धस्य तस्योत्पादनमुच्यते १३

नन्वेकस्य युगपद्भानाभानेनयुज्येते इत्याशंक्य किमिदमयुक्तत्वं अदृष्ट चरत्वमुपपत्तिरहितत्वं वानाद्यइत्याह अध्येतृवर्गेति अध्येतॄणां वेदपाठकानां वर्गः समूहस्तन्मध्ये तिष्ठतीत्यध्येतृवर्गमध्यस्थः सचासौपुत्रश्चेति तथातस्या ध्ययनं तत्कर्तृकं पठनंतस्य शब्दोध्वनिर्यथा बहिष्ठस्य पितुर्भासमानोपि सा मान्यतो न भासते विशेषतोऽयं मत्पुत्रध्वनिरिति तथा नन्दस्यापि भानेप्य भानं भवतीत्यर्थः द्वितीयंप्रत्याह भानस्येति भानेप्यभानमित्येतदत्राप्यनु

पंजनीयं भानस्फुरणस्य प्रतिबंधेन वक्ष्यमाणलक्षणेन भानेप्यभानं सामान्यतः प्रतीतावपि विशेषाकारेणाऽप्रतीतिर्युज्यते उपपद्यत इत्यर्थः कोसौप्रतिबन्धइत्यतआह प्रतिबन्धइति अस्तिभातीति व्यवहारार्हवस्तुनि अस्तिविद्यते भातिप्रकाशतइत्येवं प्रकारव्यवहारमर्हतीत्यस्ति भातिव्यवहारार्हंतच्च तद्वस्तुचेति तथा तस्मिन् तंपूर्वोक्तंव्यवहारं निरस्य निराकृत्यविरुद्धस्य नास्तिन भातीत्येवंरूपस्य तस्य व्यवहारस्योत्पादनं जननंप्रतिबंध इत्युच्यते १२।१३॥

तस्यहेतुःसमानाभिहारःपुत्रध्वनिश्रुतौ॥
इहानादिरविद्यैव व्यामोहैकनिबंधनम् १४
चिदानंदमयंब्रह्म प्रतिबिंबसमन्विता॥
तमोरजःसत्वगुणा प्रकृतिर्द्विविधाचसा १५
सत्वशुद्ध्यविशुद्धिभ्यां मायाऽविद्येचतेमते॥
मायाबिंबोवशीकृत्य तांस्यात्सर्वज्ञईश्वरः १६

उक्तलक्षणस्य प्रतिबंधस्यकारणं दृष्टान्तदार्ष्टांतिकयोः क्रमेणदर्शयति तस्येति पुत्रध्वनिश्रुतौ पुत्रध्वनिश्रवणलक्षणेदृष्टान्ते तस्य प्रतिबन्धस्यहेतुः कारणंसमानाभिहारः बहुभिः सहपठनं इह दार्ष्टांतिकेव्यामोहैकनिबन्धनं व्यामोहानां विपरीतज्ञानानामेकनिबन्धनं मुख्यंकारणमनादिरुत्पत्तिरहिताऽविद्यावक्ष्यमाणा प्रतिबन्धस्यहेतुरित्यर्थः इदानींप्रतिबन्धहेतुमविद्यांप्रतिपादयितुंतन्मूलभूतां प्रकृतिंव्युत्पादयति चिदानन्देति यच्चिदानन्दरूपंब्रह्म तस्य प्रतिबिंबेन प्रतिच्छाययासमन्विता युक्ता तमोरजः सत्वगुणा सत्वरजस्तमोगुणानां साम्यावस्थायासाप्रकृतिरित्युच्यते साचद्विविधाद्विःप्रकाराभवति चकाराद्वक्ष्यमाणं प्रकारान्तरं सूचयति सहेतुकंद्वैविध्यमेवदर्शयति सत्वेति सत्वस्यप्रकाशात्मकस्य गुणस्यशुद्धिः गुणांतरेणाऽकलुषीकृतता अविशुद्धिःगुणांतरेणकलुषीकृतत्वं ताभ्यांसत्वशुद्ध्यविशुद्धिभ्यां तेचद्विविधे मायाविधे मायेत्यविद्येतिचमतेसंमते विशुद्धसत्वप्रधानामाया मलिनसत्वप्रधानाऽविद्येत्यर्थः यदर्थमायाऽविद्ययोर्भेदउक्तस्तदिदानीं दर्शयति माया

विंबइति मायाविंबःमायायांप्रतिफलितश्चिदात्मा तांमायांवशीकृत्यस्वाधीनी कृत्यवर्तमानः सर्वज्ञः सर्वज्ञत्वादिगुणकःईश्वरः स्यात् १४।१५।१६॥

अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा ॥
साकारणशरीरंस्यात्प्राज्ञस्तत्राभिमानवान् १७
तमःप्रधानप्रकृतेस्तद्भोगायेश्वराज्ञया ॥
वियत्पवनतेजोंबुभुवोभूतानिजज्ञिरे १८

विद्यावशगोऽविद्यायांप्रतिविंबत्वेनतत्परतंत्रस्तु चिदात्माऽन्योजीवः स्यात्सच तद्वैचित्र्यात् तस्या अविद्यायाउपाधिभूतायावैचित्र्यादविशुद्धि तारतम्यादनेकधा अनेकप्रकारः देवतिर्यगादिभेदेन विविधोभवतीत्यर्थः यथा मुञ्जादिषीकैवमात्मायुक्त्या समुद्धतः शरीरत्रितयाद्धीरैः परंब्रह्मैव जायतइत्युक्तत्रशरीरत्रितयाद्विवेचितस्य जीवस्य परब्रह्मत्वंवक्ष्यति तत्रता निकानित्रीणिशरीराणितदुपाधिकोवाजीवः किंरूपोभवतीत्याकांक्षायांतत् सर्वंक्रमेणव्युत्पादयति साकारणशरीरमित्यादिना साऽविद्याकारणशरीरं स्थूलसूक्ष्मशरीरादिकारणभूताप्रकृत्यवस्था विशेषत्वात्कारणमुपचाराच्छीर्य तेतत्वज्ञानाद्विनश्यतिचेतिशरीरं स्यात्तत्र कारणशरीरेऽभिमानवान् तादा त्म्याध्यासेनाहमित्यभिमानवान् जीवःप्राज्ञःप्रज्ञाऽविनाशिस्वरूपानुभवरू पायस्यसप्रज्ञः प्रज्ञएवप्राज्ञः एतन्नामकःस्यादित्यर्थः क्रमप्राप्तंसूक्ष्मशरीरंत दुपाधिकंजीवंचव्युत्पादयितुं तत्कारणाकाशादिसृष्टिमाह तमःप्रधानेति त द्भोगायतेषां प्रज्ञानांभोगाय सुखदुःखसाक्षात्कारसिद्धये तमः प्रधानप्रकृतेस्त मोगुणप्रधानायाः प्रकृतेः पूर्वोक्ताया उपादानकारणभूतायाः सकाशादीश्व राज्ञया ईशानादिशक्तियुक्तस्य जगदधिष्ठातुराज्ञयाईक्षापूर्वकसर्जनेच्छारूप या निमित्तकारणभूतयावियदादीनि पृथिव्यंतानिपंचभूतानि जज्ञिरे प्रादुर्भू तान्युत्पन्नानीत्यर्थः १७।१८॥

सत्वांशैःपञ्चभिस्तेषांक्रमाद्धींद्रियपञ्चकम् ॥
श्रोत्रत्वगक्षिरसनघ्राणाख्यमुपजायते १९

तैरंतःकरणंसर्वैर्वृत्तिभेदेनतद्द्विधा ॥
मनोविमर्शरूपंस्याद्बुद्धिःस्यान्निश्चयात्मिका २०
रजोंशैःपंचभिस्तेषांक्रमात्कर्मेन्द्रियाणितु ॥
वाक्पाणिपादपायूपस्थाभिधानानिजज्ञिरे २१

भूतसृष्टिमभिधाय भौतिकसृष्टिमभिदधानश्चादौ ज्ञानेंद्रियसृष्टिमाह सत्वांशैरिति तेषांवियदादीनांपंचभिः सत्वांशैः सत्वगुणभागैरुपादानभूतैः श्रोत्रत्वगक्षिरसनघ्राणाख्यं धीन्द्रियपंचकंधीन्द्रियाणिज्ञानेंद्रियाणि तेषांपंचकंक्रमादुपजायते एकैकभूतसत्वांशादेकैकमिंद्रियं जायत इत्यर्थः सत्वांशानांप्रत्येकमसाधारणकार्याण्यभिधायसर्वेषां साधारणंकार्यमाह तैरंतःकरणमिति तैः सहसत्वांशैः सर्वैः संभूयवर्त्तमानैरंतःकरणंमनोबुद्ध्युपादानभूतंद्रव्यमुपजायतइत्यनुषंगः तस्यावांतरभेदंसनिमित्तमाह वृत्तीति तदंतःकरणं वृत्तिभेदेनपरिणामभेदेन द्विधाद्विप्रकारम्भवति ॥ वृत्तिभेदमेवदर्शयति मनइति विमर्शरूपंविमर्शःसंशयात्मिकावृत्तिःसास्वरूपंयस्य तत्तथातन्मनःस्यान्निश्चयात्मिकानिश्चयोऽध्यवसायः सच्चात्मारूपंयस्याः सा निश्चयात्मिका साद्वृत्तिर्बुद्धिःस्यात् क्रमप्राप्तानां रजोंशानां प्रत्येकमसाधारणकार्याण्याह रजोंशैरिति तेषांवियदादीनामेवपंचभीरजोंशैरजोभागैस्तूपादानभूतैर्वाक्पाणि पादपायूपस्थाभिधानानि एतन्नामकानिकर्मेन्द्रियाणि क्रियाजनकानिकर्मेन्द्रियाणिजज्ञिरे १६।२०।२१॥

तैःसर्वैःसहितैःप्राणोवृत्तिभेदात्सपञ्चधा ॥
प्राणोऽपानःसमानश्चोदानव्यानौचतेपुनः २२
बुद्धिकर्मेन्द्रियप्राणपंचकैर्मनसाधिया ॥
शरीरंसप्तदशभिः सूक्ष्मंतल्लिंगमुच्यते २३
प्राज्ञस्तत्राभिमानेन तैजसत्वंप्रपद्यते ॥
हिरण्यगर्भतामीशस्तयोर्व्यष्टिसमष्टिता २४

रजोंशानामेवसाधारणंकार्यमाह तैःसर्वैरिति सहितैः संभूयकारणतांगतैः

प्राणोजायतइतिशेषः तस्यावान्तरभेदमाह वृत्तिभेदादिति सप्राणोवृत्तिभेदा त्प्राणनादिव्यापारभेदात्पंचधा पंचप्रकारोभवति ॥ वृत्तिभेदानेव दर्शयति प्राणइति तेपुनस्तेतुभेदाः प्राणादिशब्दवाच्याइत्यर्थः यदर्थमाकाशादिप्राणांतानां सृष्टिरुक्तातदिदानींदर्शयति बुद्धीति बुद्धयोज्ञानानिकर्माणि व्यापारास्तज्जनकानींद्रियाणि बुद्धिकर्मेन्द्रियाणि बुद्धींद्रियाणि कर्मेन्द्रियाणि चेत्यर्थः बुद्धिकर्मेन्द्रियाणिच प्राणाश्चबुद्धिकर्मेन्द्रियप्राणाः तेषांपंचकानि तैर्मनसा विमर्शात्मकेनधियानिश्चयरूपया बुद्ध्याचसहसप्तदशभिः सप्तदशसंख्याकैः सूक्ष्मंशरीरंभवति तस्यैवसंज्ञांतरमाह तल्लिंगमितिउच्यते वेदांतेष्वित्यर्थः एवंसूक्ष्मशरीरमभिधाय तदभिमानित्वप्रयुक्तं प्राज्ञेश्वरयोरवस्थांतरं दर्शयति प्राज्ञइति प्राज्ञोमलिनसत्वप्रधानाऽविद्योपाधिको जीवस्तत्र तेजःशब्दवाच्यांतःकरणोपलक्षितलिंगशरीरेऽभिमानेन तादात्म्याभिमानेन तैजसत्वंतैजसनामकत्वं प्रपद्यते प्राप्नोति ईशःविशुद्धसत्वप्रधान मायोपाधिकः परमेश्वरस्तत्र शरीरे ऽहमित्यभिमानेन हिरण्यगर्भतां हिरण्यगर्भसंज्ञत्वं प्रपद्यतइत्यनुषंगस्तैजसहिरण्यगर्भयोर्लिंगशरीराभिमानित्वे समानेसतितयोः परस्परभेदःकिंनिबंधनइत्यतआह तयोरिति तयोस्तैजसहिरण्यगर्भयोर्व्यष्टित्वं समष्टित्वंच भवति ततएवभेदइत्यर्थः २२ । २३ । २४ ॥

समष्टिरीशःसर्वेषांस्वात्मतादात्म्यवेदनात् ॥
तदभावात्ततोन्येतुकथ्यंतेव्यष्टिसंज्ञया २५
तद्भोगायपुनर्भोग्यभोगायतनजन्मने ॥
पञ्चीकरोतिभगवान्प्रत्येकंवियदादिकम् २६

ईश्वरस्यसमष्टिरूपत्वेजीवानांव्यष्टिरूपत्वेचकारणमाह समष्टिरिति ईश ईश्वरोहिरण्यगर्भः सर्वेषांलिंगशरीरोपाधिकानां तैजसानां स्वात्मतादात्म्यवेदनात्स्वात्मनातादात्म्यस्यैकत्वस्य वेदनाद्ज्ञानात्समष्टिर्भवति ततईश्वरादन्येजीवास्तु तदभावात्तस्यतादात्म्यवेदनस्याभावात् व्यष्टिसंज्ञया व्यष्टिशब्देनकथ्यंते एवंलिंगशरीरंतदुपाधिकौतैजसहिरण्यगर्भौचदर्शयित्वा स्थूलशरीराद्युत्पत्तिसिद्धये पंचीकरणंनिरूपयितुमाह तद्भोगायेति भगवानैश्वर्या

द्विगुणषट्कसंपन्नः परमेश्वरः पुनःपुनरपितद्भोगायतेषां जीवानां भोगायैव भोग्यभोगायतनजन्मने भोग्यस्यान्नपानादेर्भोगायतनस्य जरायुजादिचतुर्विधशरीरजातस्यच जन्मनेउत्पत्तये वियदादिकमाकाशादिभूतपंचकंप्रत्येकमेकैकंपंचीकरोत्यपंचात्मकंपंचात्मकं संपद्यमानंकरोति २५। २६॥

द्विधाविधायचैकैकंचतुर्धाप्रथमंपुनः॥
स्वस्वेतरद्वितीयांशैर्योजनात्पञ्चपञ्चते २७

अथ कथमेकैकस्यपञ्चात्मकत्वमित्यतआह द्विधाविधायेति वियदादिकं एकैकंद्विधाद्विधातंत्रेणोच्चारितोद्विधाशब्दः विधायकृत्वाभागद्वयोपेतंकृत्वेत्यर्थः पुनश्चपुनरपिप्रथमं प्रथमंभागं चतुर्धाभागचतुष्टयोपेतं विधायेत्यनुषज्यते स्वस्वेतरद्वितीयांशैः स्वस्मात्स्वस्मादितरेषां चतुर्णां चतुर्णां भूतानां योयोद्वितीयः स्थूलोभागस्तेन तेनसहप्रथमं प्रथमभागांशानां चतुर्णां चतुर्णां मध्ये एकैकस्ययोजनाते वियदादयःप्रत्येकं पंचपंचात्मकाभवंति २७॥

तैरण्डस्तत्रभुवनभोग्यभोगाश्रयोद्भवः॥
हिरण्यगर्भःस्थूलेऽस्मिन्देहेवैश्वानरोभवेत् २८
तैजसाविश्वतांयाता देवतिर्यङ्नरादयः॥
तेपराग्दर्शिनःप्रत्यक्तत्त्ववोधविवर्जिताः २९

एवंपञ्चीकरणमभिधाय तैर्भूतैरुत्पाद्यंकार्यवर्गंदर्शयति तैरण्डइति तैःपञ्चीकृतैर्भूतैरुपादानकारणभूतैरण्डः ब्रह्माण्डः उत्पद्यते तत्रब्रह्माण्डान्तः भुवनान्युपरिभागेवर्त्तमानाभूरादयः सप्तलोकाभूमेरधः स्थितान्यतलादीनि सप्तपातालांतानि तेषुचभुवनेषुतैस्तैः प्राणिभिर्भोक्तुंयोग्यान्यन्नादीनि तत्तल्लोकोचितशरीराणिच तैरेवपञ्चीकृतैरेवपञ्चीकृतैर्भूतैरीश्वराज्ञयाजायंते एवंस्थूलशरीरोत्पत्तिमभिधाय तेषु स्थूलशरीरेष्वभिमानवतोहिरण्यगर्भस्य समष्टिरूपस्यवैश्वानरसंज्ञकत्वं एकैकस्थूलशरीराभिमानवतां पष्टिरूपाणांतैजसानां विश्वसंज्ञकत्वंचभवतीत्याहहिरण्यगर्भइति अस्मिन्स्थूलदेहे वर्त्तमानोहिरण्यगर्भोवैश्वानरोभवेत् तत्रैववर्तमानास्तैजसाविश्वाभवंति तेषामवांतरभेद

माहदेवेतिइदानींतेषांविश्वसंज्ञांप्राप्तानां जीवानां तत्त्वज्ञानरहितत्वेन संसाराप त्तिप्रकारं सदृष्टांतंश्लोकद्वयेनाह तेपरागिति तेदेवादयः पराग्दर्शिनः बाह्या नेवशब्दादीनेव पश्यंतिनतुप्रत्यगात्मानं परांचिखानिव्यतृणत्स्वयंभूस्तस्मा त्पराङ्पश्यतिनांतरात्मन्नितिश्रुतेः २८ । २९ ॥

कुर्वंतेकर्मभोगाय कर्मकर्तुंचभुंजते ॥
नद्यांकीटाइवावर्तादावर्तांतरमाशुते ३०
व्रजंतोजन्मनोजन्मलभंतेनैवनिर्वृतिम् ॥
सत्कर्मपरिपाकांतेकरुणानिधिनोद्धताः ३१
प्राप्यतीरतरुच्छायांविश्राम्यंतियथासुखम् ॥
उपदेशमवाप्यैवमाचार्यात्तत्त्वदर्शिनः ३२
पञ्चकोशविवेकेनलभंतेनिर्वृतिंपराम् ॥
अन्नंप्राणोमनोबुद्धिरानन्दश्चेतिपञ्चते ३३

ननुतार्किकादयो देहव्यतिरिक्तमात्मानं जानंतीत्याशंक्य यद्यप्यात्मानं तेजानंति तथापिश्रुतिसिद्धंतत्त्वं न जानंतीत्याशयेनोक्तमित्याह प्रत्यगिति अतएव भोगायसुखाद्यनुभवाय मनुष्यादिशरीराण्यधिष्ठाय कर्मतत्तच्छरीरो चितानि कर्माणिकुर्वते जातावेकवचनं पुनश्चकर्मकर्तुं देवादिशरीरैस्तत्तत्फलं भुंजते च फलानुभवाभावेतत्तत्सजातीयेच्छानुपपत्त्यातत्तत्साधनानुष्ठानानु पपत्तेरेवंवर्तमानास्तेजीवाः नदीप्रवाहपतिताः कीटाश्चावर्तादावर्तांतरमाशुव्र जंतो यथा निर्वृतिंसुखंनलभंते एवमाशुजन्मनोजन्मव्रजंतः सुखंनैवलभंत इतिएवंसंसारापत्तिमभिधायतन्निवृत्त्युपायंदर्शयितुं दृष्टांततावदाह सत्कर्मेति तेकीटाःसत्कर्मपरिपाकात्पूर्वोपार्जितपुण्यकर्मपरिपाकात्कृपालुना केनचित्पु रुषविशेषेणोद्धताः नदीप्रवाहाद्बहिर्निःसारिताः संतस्तीरतरुच्छायां प्राप्यसुखं यथाभवति तथायद्वद्विश्राम्यंति इदानींदृष्टांतसिद्धमर्थंदार्ष्टांतिकेयोजयति उपदेशमिति एवमुक्तेनप्रकारेण पूर्वोपार्जितपुण्यकर्मपरिपाकवशादेव तत्व दर्शिनः प्रत्यगभिन्नब्रह्मसाक्षात्कारवत आचार्यादगुरोः सकाशादुपदेशं तत्व

मस्यादिवाक्यार्थज्ञानसाधनं श्रवणंवक्ष्यमाणमवाप्यसंपाद्य पंचकोशविवेकेनान्नादीनां पञ्चानांकोशानां विवेकेन वक्ष्यमाणविवेचनेनपरांनिर्वृतिं मोक्षसुखंलभंते प्राप्नुवंति केतेऽन्नादयः पञ्चकोशाइत्याकांक्षायांतानुद्दिशति अन्नंप्राणइति अन्नंप्राणोमनोबुद्धिरानंदश्चेतितेपञ्चकोशाः बुद्धिर्विज्ञानम् ३०। ३१। ३२। ३३॥

कोशास्तैरावृतःस्वात्माविस्मृत्यासंसृतिंव्रजेत्॥
स्यात्पंचीकृतभूतोत्थोदेहःस्थूलोऽन्नसंज्ञकः ३४
लिंगेतुराजसैःप्राणैःप्राणःकर्मेन्द्रियैःसह॥
सात्विकैर्धीन्द्रियैःसाकंविमर्शात्मामनोमयः ३५
तैरेवसाकंविज्ञानमयोधीर्निश्चयात्मिका॥
कारणेसत्वमानन्दमयोमोदादिवृत्तिभिः ३६

तेषामन्नादीनांकोशशब्दाभिधेयत्वेकारणमाह तैरितितैःकोशैरावृतआच्छादितः स्वात्मास्वरूपभूतआत्माविस्मृत्या स्वस्वरूपविस्मरणेन संसृतिं जननादिप्राप्तिरूपंसंसारंव्रजेत् स्पष्टंकोशोयथाकोशकारकृमेरावरकत्वेन क्लेशहेतुरेवमन्नादयोप्यद्वयानन्दत्वाद्यावरकत्वेनात्मनः क्लेशहेतुत्वात्कोशाइत्युच्यंतइत्यर्थः तेषांकोशानांस्वरूपाणिक्रमेण व्युत्पादयति स्यात्पञ्चीकृतेत्यादिनामोदादिवृत्तिभिरित्यंतेन पञ्चीकृतेभ्योभूतेभ्यउत्पन्नः स्थूलोदेहोन्नसंज्ञकः अन्नमयशब्दितःकोशः स्यात्प्राणस्तुप्राणमयकोशस्तुलिङ्गेलिङ्गशरीरेवर्त्तमानैराजसैरजोगुणकार्यभूतैः प्राणैःप्राणापानादिभिर्वायुभिःपंचभिर्वागादिभिः कर्मेन्द्रियैःसहदशभिःस्याद्विमर्शात्मासंशयात्मकं पञ्चभूतसत्वकार्यंयन्मनउक्तंतत्सात्विकैः प्रत्येकं भूतसत्वकार्यभूतैर्धीन्द्रियैःश्रोत्रादिभिः पञ्चभिर्ज्ञानेंद्रियैः साकंसहितंमनोमयः कोशःस्यादितिपूर्वेणसंबन्धःनिश्चयात्मिका धीस्तेषामेवसत्वकार्यरूपाबुद्धिस्तैरेव पूर्वोक्तैर्ज्ञानेन्द्रियैरेवसाकंसहितासती विज्ञानमयः विज्ञानमयाख्यः कोशःस्यात्कारणे कारणभूतायामविद्यायां यन्मलिनसत्वमस्तितन्मोदादिवृत्तिभिःप्रियमोदप्रमोदाख्यैरिष्टदर्शनलाभभोगजन्यैः

सुखविशेषैः सहितमानंदमयश्चानन्दमयाख्यः कोशःस्यादिति ३४।३५।३६॥

तत्तत्कोशैस्तुतादात्म्यादात्मातत्तन्मयोभवेत् ॥
अन्वयव्यतिरेकाभ्यां पंचकोशविवेकतः ३७
स्वात्मानंततउद्धृत्य परंब्रह्मप्रपद्यते ॥
अभानेस्थूलदेहस्य स्वप्नेयद्भानमात्मनः ३८
सोन्वयोव्यतिरेकस्तद्भानेऽन्याऽनवभासनम् ॥
लिंगाभानेसुषुप्तौस्यादात्मनोभानमन्वयः ३९

ननुस्थूलशरीरादीनामन्नमयादिशब्दवाच्यत्वे सवाएपपुरुषोऽन्नरसमयइत्युपक्रम्य तस्माद्वा एतस्मादन्नरसमयादन्योन्तर आत्माप्राणमयोऽन्योन्तर आत्मामनोमय इत्यादिश्रुतत्वादात्मनोऽन्नमयादिशब्दवाच्यत्वं कथमुच्यते इत्याशंक्यदेहादीनामन्नादिविकारत्वेनान्नमयादिशब्दवाच्यत्वमात्मनस्तुतेनतेनकोशेनतादात्म्याभिमानादित्याहतत्तदिति आत्माप्रत्यगात्मातत्तत्कोशैस्तेन तेनकोशेनसहतादात्म्यात्तादात्म्याभिमानात्तत्तन्मयस्तत्तत्कोशमयः स्याद्व्यवहारकालेऽन्नमयादिकोशप्राधान्यादन्नमयादिशब्दवाच्यइत्यर्थः तु शब्दआत्मनः कोशेभ्योवैलक्षण्यद्योतनार्थः कथंतर्ह्येवंविधस्यात्मनोब्रह्मत्वं भवतीत्याशंक्य कोशेभ्योविवेचनाद्भवतीत्याह अन्वयेति अन्वयव्यतिरेकाभ्यां वक्ष्यमाणाभ्यांपंचकोशविवेकतः पञ्चानांकोशानामन्नमयादीनां विवेकतः प्रत्यगात्मनो विवेचनेनपृथक्करणेन यद्वापंचकोशेभ्योऽन्नमयादिभ्य आत्मनःपृथक्करणेनस्वात्मानंप्रत्यगात्मानंततस्तेभ्यः कोशेभ्यउद्धृत्यबुद्ध्या निष्कृष्यचिदानन्दस्वरूपं निश्चित्यपरंब्रह्म पूर्वोक्तलक्षणंप्रपद्यतेप्राप्नोतिब्रह्मैव भवतीत्यर्थःइदानींविवक्षितान्वयव्यतिरेकौदर्शयति अभानइति स्वप्नेस्वप्नावस्थायांस्थूलदेहस्यान्नमयकोशस्याभानेऽप्रतीतौ सत्यामात्मनः प्रतीचोयद्भानंस्वप्नसाक्षित्वेनयत्स्फुरणमस्तिसआत्मनोऽन्वयस्तस्यामेव स्वप्नावस्थायां तद्भानेतस्यात्मनःस्फुरणेसति अन्यानवभासनमन्यस्य स्थूलदेहस्यानवभासनमप्रतीतिःव्यतिरेकःस्थूलदेहस्येतिशेषः अस्मिन्प्रकरणेऽन्वयव्यतिरेकशब्दा

भ्यांअनुवृत्तिव्यावृत्तीउच्येतेएवंस्थूलदेहस्यानात्मत्वावबोधकावन्वयव्यतिरे कौदर्शयित्वालिंगदेहस्य तथात्वावगमकौदर्शयति लिंगेति सुषुप्तौसुषुप्त्यव स्थायांलिंगाभाने लिंगस्यसूक्ष्मदेहस्याभानेऽप्रतीतौ आत्मनोभानंतदव स्थासाक्षित्वेनस्फुरणमात्मनोन्वयःस्यात् ३७। ३८। ३६ ॥

व्यतिरेकस्तुतद्भाने लिंगस्याभानमुच्यते ॥
तद्विवेकाद्विविक्ताःस्युः कोशाःप्राणमनोधियः ४०
तेहितत्रगुणावस्था भेदमात्रात्पृथक्कृताः ॥
सुषुप्त्यभानेभानंतु समाधावात्मनोऽन्वयः ४१

तद्भानेआत्मभानेलिंगस्याभानं लिंगदेहस्य अस्फुरणंव्यतिरेकइत्युच्यते ननुपंचकोशविवेचनमुपक्रम्यलिंगदेहविवेचनं प्रकृतासंगतमित्याशंक्य प्राणमयादिकोशत्रितयस्य तत्रैवांतर्भावान्न प्रकृतावसंगतिरित्याह तद्विवेकादिति तस्यलिंगशरीरस्य विवेकाद्विवेचनात्प्राणमनोधियएतन्नामकाः कोशाविविक्ताःआत्मनःपृथक्कृताः स्युः कुतइत्यतआह तेहीति हियस्मात्कारणात्ते प्राणमयादयस्तत्र तस्मिन्लिंगशरीरे गुणावस्थाभेदमात्राद्गुणयोः सत्वरजसोरवस्थाभेदमात्राद्गुणप्रधानभावेनावस्थानविशेषादेव पृथक्कृताः भेदेन निर्दिष्टाइत्यर्थः इदानीमानंदमयकोशत्वेनविवक्षितस्य कारणशरीरस्य विवेचनोपायमाह सुषुप्तीतिसमाधौ वक्ष्यमाणलक्षणायांसमाध्यवस्थायां सुषुप्त्यभाने सुषुप्तिशब्दोपलक्षितस्य कारणदेहरूपस्याज्ञानस्याप्रतीतौआत्मनस्तु तुशब्दोवधारणे आत्मनएवभानं स्फुरणंयदस्ति सआत्मनोऽन्वयः ४०। ४१ ॥

व्यतिरेकस्त्वात्मभाने सुषुप्त्यनवभासनम् ॥
यथामुंजादिषीकैवमात्मायुक्त्यासमुद्धृतः ४२
शरीरत्रितयाद्धीरैः परंब्रह्मैवजायते ॥
परापरात्मनोरेवं युक्त्यासम्भावितैकता ४३

आत्मभाने आत्मनःस्फूर्तौसत्यां सुषुप्त्यनवभासनं सुषुप्त्युपलक्षितस्याज्ञानस्याप्रतीतिरेवव्यतिरेकस्तस्येति अत्रायंप्रयोगः प्रत्यगात्माअन्नमयादिभ्यो भिद्यतेतेषु परस्परंव्यावर्तमानेष्वपि स्वयमव्यावृतत्वात् यद्येषुव्यावर्तमानेष्वपिनव्यावर्तते तत्तेभ्योभिद्यते यथाकुसुमेभ्यःसूत्रंयथावाखंडादिव्यक्तिभ्योगोत्वमिति अन्वयव्यतिरेकाभ्यां कोशपंचकात्विविक्तस्यात्मनोब्रह्मप्राप्तिर्भवतीत्युक्तं तत्प्रतिपादिकामंगुष्ठमात्रः पुरुषोंतरात्मेत्यादिकान्तं विद्याच्छुक्रममृतमित्यंतांकठश्रुतिमर्थतःपठति यथेति यथायेनप्रकारेण मुंजादेतन्नामकात्तृणविशेषादिषीकागर्भस्थं कोमलतृणंयुक्त्या वहिरावरकत्वेनस्थितानां स्थूलपत्राणांविभजनलक्षणेनोपायेनसमुद्ध्रियते एवमात्मापियुक्त्याऽन्वयव्यतिरेकेणोपायेन शरीरत्रितयात्पूर्वोक्ताच्छरीरत्रितयाद्धीरैः ब्रह्मचर्यादिसाधनसंपन्नैरधिकारिभिः समुद्धृतः पृथक्कृतश्चेत् सपरंब्रह्मैवजायते चिदानन्दरूपत्वस्यलक्षणस्योभयोरविशिष्टत्वादित्यभिप्रायः एतावताग्रंथसन्दर्भेण सफलस्यतत्वज्ञानस्य निरूपितत्वादुत्तरग्रंथभागस्यानारम्भप्रसंगइत्याशंक्य तदारम्भसिद्धये वृत्तानुकीर्तनपूर्वकमुत्तरग्रन्थस्यतात्पर्यमाह परापरेति एवमुक्तेनप्रकारेण परापरात्मनोस्तत्वंपदार्थयोः परमात्मजीवात्मनोरेकताऽभिन्नतायुक्त्या लक्षणसाम्यमदर्शनाद्युपायेन सम्भाविताअंगीकारिता ४२ । ४३ ॥

तत्वमस्यादिवाक्यैःसा भागत्यागेनलक्ष्यते ॥
जगतोयदुपादानं मायामादायतामसीम् ४४
निमित्तंशुद्धसत्वांतामुच्यतेब्रह्मताद्गिरा ॥
यदामलिनसत्वांतांकामकर्मादिदूषिताम् ४५
आदत्तेतत्परंब्रह्मत्वंपदेनतदोच्यते ॥
त्रितयीमपितांमुक्त्वापरस्परविरोधिनीम् ४६

साएकतातत्वमस्यादिवाक्यैःस्पष्टं भागत्यागेन विरुद्धांशपरित्यागेन लक्ष्यते लक्षणयावृत्त्यावोध्यते तत्वमसीतिवाक्यार्थज्ञानस्य तत्पदादिपदार्थज्ञानपूर्वकत्वात्तत्पदस्यवाच्यार्थंतावदाह जगतइति यत्सच्चिदानन्दलक्ष

एवंब्रह्मतामसीं तमोगुणप्रधानां मायामादाय उपाधित्वेनस्वीकृत्यजगतश्चरा चरात्मकस्य कार्यवर्गस्य उपादानमध्यासाधिष्ठानं शुद्धसत्वां विशुद्धस त्वप्रधानांतामुपाधित्वेन स्वीकृत्यनिमित्तमुपादानाद्यभिन्नं कर्तृभवतितद्ब्रह्म निमित्तोपादानं भयरूपंब्रह्मतद्गिरा तत्वमसिवाक्यस्थेनतत्पदेनोच्यते त्वंपद वाच्यार्थमाह यदेति तदेवब्रह्मयदायस्यामवस्थायां मलिनसत्वांईषद्रजस्त मोमिश्रणेन मलिनसत्वप्रधानां अतएव कामकर्मादि दूषितामविद्या शब्द वाच्यां मायामादत्ते उपाधित्वेन स्वीकरोति तदात्वंपदेनोच्यते एवं तत्वं प दार्थाविभिधायवाक्यार्थमाह त्रितयीमिति त्रितयीमपि त्रिप्रकारामपि तमः प्रधानविशुद्धसत्व प्रधानमलिनसत्व प्रधानत्वभेदेनोक्तामत एव परस्पर वि रोधिनींतांमायांमुक्त्वापरित्यज्य ४४। ४५। ४६ ॥

अखण्डंसच्चिदानन्दंमहावाक्येनलक्ष्यते ॥
सोयमित्यादिवाक्येषुविरोधात्तदिदन्तयोः ४७
त्यागेनभागयोरेकआश्रयोलक्ष्यतेयथा ॥
मायाविद्येविहायैवमुपाधीपरजीवयोः ४८
अखण्डंसच्चिदानन्दंपरंब्रह्मैवलक्ष्यते ॥
सविकल्पस्यलक्ष्यत्वेलक्ष्यस्यस्यादवस्तुता ४९

अखण्डंभेदरहितं सच्चिदानन्दं ब्रह्म महावाक्येन लक्ष्यते इत्युक्तम् न न्वेवं लक्षणावृत्त्यावाक्यार्थ वोधनं क्वदृष्टमित्याशंक्याह सोयमिति सोयं देवदत्तइत्यादि वाक्येषु तदिदंतयोस्तदेतद्देशकालवैशिष्ट्यलक्षणयोर्धर्मयो र्विरोधादैक्यानुपपत्तेर्भागयोर्विरुद्धांशयोस्त्यागे नैकआश्रयोदेवदत्तस्वरूपमे कमेवयथालक्ष्यते एवं दृष्टांतमभिधायदार्ष्टांतिकमाह मायाविद्येइति एवं सोयंदेवदत्तइत्यादिवाक्ये यथा तद्वत्परजीवयोरुपाधी उपाधिभूते मायाविद्ये पूर्वोक्तेविहायाखंडं भेदरहितं सच्चिदानंदं परंब्रह्मैवमहावाक्येनलक्ष्यते ननुकिं महावाक्येनलक्ष्यं सविकल्पमुतनिर्विकल्पमिति विकल्प्यप्रथमेपक्षेदोषमाह पूर्ववादी सविकल्पस्येति सविकल्पस्य विकल्पेन विपरीतत्वेन कल्पितेन

नामजात्यादिनारूपेणवर्त्ततइति सविकल्पं तस्यलक्ष्यत्वेवाक्येन बोध्यत्वेल क्ष्यस्य वाक्यार्थतयालक्ष्यस्याऽवस्तुतामिथ्यात्वंस्यात् ४७ । ४८ । ४९ ॥

निर्विकल्पस्यलक्ष्यत्वं नदृष्टंनचसंभवि ॥
विकल्पोनिर्विकल्पस्य सविकल्पस्यवाभवेत् ५०
आद्येव्याहतिरन्यत्राऽनवस्थात्माश्रयादयः ॥
इदंगुणक्रियाजाति द्रव्यसंबन्धवस्तुषु ५१
समंतनस्वरूपस्य सर्वमेतदितीष्यताम् ॥
विकल्पतदभावाभ्यामसंस्पृष्टात्मवस्तुनि ५२

द्वितीयेदोषमाह निर्विकल्पस्येति निर्विकल्पस्यनामजात्यादिनारहितस्य लक्ष्यत्वंनदृष्टं लोकेनक्वापिदृष्टं नचसंभविउपपद्यमानमपिनभवति लक्ष्यत्वभ भवतो निर्विकल्पत्वव्याघातादिति यावत् सिद्धान्तीजात्युत्तरत्वान्नेदं बोध मिति विकल्पपूर्वकंदोषमाह विकल्पइति सविकल्पस्यवा निर्विकल्पस्यवा लक्ष्यत्वमितियो विकल्पस्त्वयाकृतः सकिंनिर्विकल्पस्य उतसविकल्पस्य भ वेदाद्येप्रथमेपक्षे व्याहतिस्त्वयोक्तो व्याघातएवअन्यत्र द्वितीयेपक्षेऽनवस्था दयस्तथाहि सविकल्पस्य विकल्पइत्यत्रविकल्पेन सहवर्त्ततइत्यत्रतृतीयान्त विकल्पपदेन प्रथमान्तविकल्पपदेन चैकएवविकल्पोभिधीयतेद्वौवा एकएव चेत्स्वयमेकएव विकल्पाश्रयविशेषण तयाआश्रयस्तदाश्रितो विकल्पश्चे त्यात्माश्रयताद्वौ चेतदातृतीयांतशब्दनिर्दिष्टस्यापि विकल्पस्य विकल्परूप त्वात्तदाश्रयस्यापि सविकल्पत्वात्तद्विशेषण भूतोविकल्पःकिंप्रथमान्तशब्द निर्दिष्टएव विकल्पउत्तताभ्योमन्यः आद्येअन्योन्याश्रयता द्वितीयेपिधर्मि विशेषणीभूतो विकल्पः किंप्रथमान्तशब्दनिर्दिष्टउततेभ्योऽन्यआद्येचक्रका यतिर्द्वितीयेतस्याप्यमस्तस्यापि अन्यइत्यनवस्थायातइति नकेवलमत्रैवेदं दूषणमपितुसर्वत्रैवंविध विकल्पपूर्वकं दूषणंप्रसरतीत्याह इदमिति इदंविक ल्पदूषणजातं गुणक्रियाजातिद्रव्य संबंधवस्तुषुगुणादि संबंधांतेषु पंचसुव स्तुषुसमं तथाहि गुणःकिंनिर्गुणेवर्ततेऽथवा गुणवतिक्रियापि क्रियारहितेव

र्वेते क्रियावतिवाश्राद्ये व्याघातोऽन्यत्रात्माश्रयादयइति सर्वत्रचैवमूह्यं न न्विदमसङ्गत्तरंचेत्किं सङ्गतरमित्याशंक्याहतेनेति तेनैवंविकल्पस्यासंगतत्वे नैतद्गुणादिकंसर्वस्वरूपस्येतीष्यतांगुणादयःसर्वेवस्तुस्वरूपेवर्ततइत्यभिप्रायः भवत्येवमन्यत्र प्रकृतेकिमायातमित्यतआह विकल्पेति विकल्पतदभावाभ्यां विकल्पेनविकल्पाभावेन चासंस्पृष्टात्मवस्तुनि संस्पर्शरहिते परमात्मवस्तु नि ५० । ५१ । ५२ ॥

विकल्पितत्वलक्ष्यत्व संबंधाद्यास्तुकल्पिताः ॥
इत्थंवाक्यैस्तदर्थानु संधानंश्रवणंभवेत् ५३
युक्त्या भावितत्वानु संधानंमननंतुतत् ॥
ताभ्यांनिर्विचिकित्सेर्थे चेतसःस्थापितस्ययत् ५४
एकतानत्वमेतद्धि निदिध्यासनमुच्यते ॥
ध्यातृध्यानेपरित्यज्य क्रमाद्ध्येयैकगोचरम् ५५
निवातदीपवच्चित्तं समाधिरभिधीयते ॥
वृत्तयस्तुतदानीम ज्ञाताअप्यात्मगोचराः ॥
स्मरणादनुमीयंतेव्युत्थितस्यसमुत्थितात् ५६

विकल्पितत्वलक्ष्यत्व सम्बन्धाद्यास्तत्र विकल्पितत्वंनामसविकल्पस्य वानि र्विकल्पस्य वेतिपूर्वोक्तेनविपर्यीकृतत्वं लक्ष्यत्वंलक्षणावृत्त्याज्ञाप्यत्वं सम्बन्धः संयोगादिराद्दिशब्देन द्रव्यादयोगृह्यंतेतु शब्दोऽवधारणे तत्रद्रव्यंनामगुण नामाश्रयोद्रव्यं समवायिकारणंद्रव्यमिति वातार्किकैर्लक्षितं कर्मव्यतिरिक्तत्वे सतिजातिमात्राश्रयोगुणः नित्यमेकमनेकवृत्तिसामान्यमितिलक्षिताजातिः संयोगवियोगयोरसमवायि कारणजातीयंकर्मेतिलक्षिता क्रियाएतेसर्वेस्वरूपे कल्पिताएवेत्यर्थः॥एतावताग्रन्थसंदर्भेण किमुक्तंभवतीत्याकांक्षायांफलितमाह इत्थमिति इत्थंजगतोयउपादानमित्यादिग्रन्थजातोक्तप्रकारेण वाक्यैस्तत्त्वम स्यादिवाक्यैस्तदर्थानुसन्धानंतेषां वाक्यानामर्थस्यजीव ब्रह्मणोरेकत्वलक्षण स्यानुसंधानंश्रवणंभवेद्युक्त्याशब्दस्पर्शादयोवेद्याइत्यादिना परापरात्मनोरे

वंयुक्त्यासंभावितैकतेत्यंतेन ग्रन्थसन्दर्भेणोक्तप्रकारेणासम्भावितत्वानुसन्धानं श्रुतस्यार्थस्योपपद्यमानत्वज्ञानंयदस्तितत्तुमननमित्युच्यते इदानींनिदिध्यासनमाहताभ्यामितिताभ्यांश्रवणमननाभ्यां निर्विचिकित्सेनिर्गताविचिकित्सा संशयो यस्मादसौनिर्विचिकित्सः तस्मिन्नर्थेविषयेस्थापि तस्यधारणावतश्चेतः सन्देशसम्बन्धश्चितस्यधारणेति पतंजलिनोक्तत्वाद्यदेकतानत्वमेकाकारवृत्तिप्रवाहवत्वमेतन्निदिध्यासनमुच्यते हिप्रसिद्धंयोगशास्त्रेतत्रप्रत्ययैकतानताध्यानमिति ॥तस्यैवनिदिध्यासनस्यपरिपाकदशारूपंसमाधिमाह ध्यातृध्यानेइतिनिदिध्यासनेतावद्ध्याता ध्यानं ध्येयंचेतित्रितयं भासतेतत्रयदाचितमभ्यासवशेनध्यातृध्याने ध्यातारंध्यानंचक्रमात्परित्यज्य ध्येयैकगोचरं ध्येयमेवगोचरोविषयोयस्यतत्तथाविधंभवति तदासमाधिरित्युच्यते तत्रदृष्टांतः निवातेति वायुरहितेप्रदेशेवर्त्तमानोदीपोयथानिश्चलोभवति तद्वदित्यर्थः ननुसमाधौवृत्तीनामनुपलब्धौ ध्येयैकगोचरत्वमपिनिश्चेतुं नशक्यतइत्याशंक्यवृत्तिसद्भावस्यानुमानगम्यत्वान्नैवमित्याह वृत्तयस्त्विति आत्मगोचरा आत्मागोचरोविषयो यासांतावृत्तयस्तु तदानींसमाधिकाले ऽज्ञाताअपिव्युत्थितस्यसमाधेरुत्थितस्य समुत्थितादुत्पन्नात्स्मरणादेतावंतंकालं समाहितोऽभूवमित्येवं रूपादनुमीयंतेयद्यत्स्मर्यते ततदनुभूतमिति व्याप्तेर्लोकसिद्धत्वादित्यर्थः ५३ । ५४ । ५५ । ५६ ॥

वृत्तीनामनुवृत्तिस्तु प्रयत्नात्प्रथमादपि ॥
अदृष्टासकृदभ्यास संस्कारसचिवाद्भवेत् ५७
यथादीपोनिवातस्थ इत्यादिभिरनेकधा ॥
भगवानिममेवार्थमर्जुनायव्यरूपयत् ५८

नतुतदानींवृत्त्युत्पादक प्रयत्नाभावात्कथं वृत्त्यनुवृत्तिरित्याशंक्य तात्कालिकप्रयत्नाभावेपि प्राथमिकादेवप्रयत्नाददृष्टादिसहकारिसहिताद्भवतीत्याह वृत्तीनामिति ध्येयैकगोचराणां वृत्तीनामनु वृत्तिस्तुप्रवाहरूपेणानुगतिस्तु प्रथमादपिप्रयत्नात्समाधि पूर्वकालीनादपि अदृष्टमशुक्लकृष्णकर्माख्योयः पुण्यविशेषः कर्माशुक्लकृष्णंयोगिनस्त्रिविधमितरेषामिति पतंजलिनासूत्रि

तत्वात्यश्चासकृदभ्याससंस्कारः पुनः पुनः समाध्यभ्यासेन जनितोभावनाख्यः संस्कारविशेषस्ताभ्यां सहकारिकारणाभ्यां सहवर्तमानाद्भवति नन्वयं समाधिः पूर्वाचार्यैर्ननिरूपितोदृष्ट इत्याशंक्यसर्वगुरुणा श्रीपुरुषोत्तमेन निरूपितत्वान्मैवमित्याह यथेति यथादीपोनिवातस्थोनेगतेसोपमास्मृतेत्यादिभिःश्लोकैरनेकधा नानाप्रकारेण भगवान्ज्ञानैश्वर्यादि सम्पन्नइममेवनिर्विकल्पकसमाधिरूपमर्थममार्जुनाय शिष्यायन्यरूप्ययन्निरूपितवान् ५७। ५८॥

अनादाविहसंसारेसञ्चिताःकर्मकोटयः॥
अनेनविलयंयांतिशुद्धोधर्मोविवर्द्धते ५९
धर्ममेघमिमंप्राहुःसमाधिंयोगवित्तमाः॥
वर्षत्येषयतोधर्मामृतधाराःसहस्रशः ६०
अमुनावासनाजालेनिःशेषंप्रविलापिते॥
समूलोन्मूलितेपुण्यपापाख्येकर्मसंचये ६१

अस्यसमाधेरवांतरफलमाह अनादाविति अनादौस्पष्टं इहास्मिन्संसारे संचिताः सम्पादिताः कर्मकोटयः कर्मणांपुण्यापुण्यलक्षणानां कोटयइत्युपलक्षणं अपरिमितानिकर्माणीत्यर्थः अनेनसमाधिनाविलयं यांतिविनश्यंति क्षीयंतेचास्यकर्माणि तस्मिन्दृष्टेपरावरे ज्ञानाग्निःसर्वकर्माणीतिश्रुतेः स्मृतेश्चशुद्धोधर्म्मः सविलासाविद्यानिवर्तकसाक्षात्कार साधनभूतोधर्मोविवर्द्धतेस्पष्टं तत्रकिंप्रमाणमित्यतआह धर्मेतियोगवित्तमाः अतिशयेनयोगज्ञाब्रह्मसाक्षात्कारवंतइतियावत् इमंनिर्विकल्पसमाधिंधर्ममेघंप्राहुःस्पष्टं तदुपपादयति वर्षतीति यतःकारणादेषसमाधिः धर्मामृतधाराः धर्मलक्षणाअमृतधाराः सहस्रशोवर्षति क्षणमेकंक्रतुस्यापीतिश्रुतेरतोधर्ममेघं प्राहुरितिपूर्वेणान्वयः इदानींसमाधेः परमप्रयोजनमाह अमुनेति अमुनासमाधिनावासनाजाले अहंकारममकारकर्तृत्वाद्यभिमान हेतुभूतेज्ञानविरुद्धेसंस्कारसमूहे निःशेषंयथाभवति तथाप्रविलापितेविनाशिते पुण्यपापाख्येकर्मसंचये समूलोन्मूलिते मूलसहितं यथाभवति तथोन्मूलितेउद्धृतेविनाशितइतियावत् ५९।६०।६१॥

वाक्यमप्रतिवद्धंसत्प्राक्परोक्षावभासिते ॥
करामलकवद्बोधमपरोक्षंप्रसूयते ६२
परोक्षंब्रह्मविज्ञानंशाब्दंदेशिकपूर्वकम् ॥
बुद्धिपूर्वकृतंपापं कृत्स्नंदहतिवह्निवत् ६३
अपरोक्षात्मविज्ञानं शाब्दंदेशिकपूर्वकम् ॥
संसारकारणाज्ञान तमसश्चंडभास्करः ६४

फलितमाहवाक्यमिति वाक्यंतत्वमस्यादिवाक्यं अप्रतिवद्धंसत्कर्मवास नाभ्यांप्रतिवंधरहितं सत्प्राक्परोक्षावभासितेपूर्वं परोक्षतयाप्रकाशिते तत्वेकरा मलकवत्करस्थितामलकगोचरमिवापरोक्षमपरोक्षतया तत्वावभासनसमर्थंवो धंज्ञानं प्रसूयतेजनयति इदानींपरोक्षज्ञानस्यफलमाह परोक्षमिति देशिकं पूर्वकं गुरुमुखाल्लब्धंशाब्दंतत्वमस्याद्यागमजन्यंपरोक्षं ब्रह्मविज्ञानं बुद्धिपूर्व कंज्ञान पूर्वंयथाभवतितथा कृतंकृत्स्नं समस्तंपापं वह्निवद्दहति अपरोक्षज्ञान फलमाह अपरोक्षेति शाब्दंदेशिकपूर्वकंव्याख्यातं अपरोक्षात्मविज्ञानमपरो क्षस्यात्मनो विज्ञानंसंशयविपर्ययरहितं यज्ज्ञानंतत्संसारकारणाज्ञानतमसः संसारकारणं यदज्ञानमस्तितदेवतमस्तस्य चण्डभास्करः मध्याह्नकालीनः सूर्यः वाह्यतमसश्चण्ड भास्करइवाज्ञानतमसो निवर्त्तकमित्यर्थः ६२।६३।६४॥

इत्थंतत्वविवेकंविधाय विधिवन्मनःसमाधाय ॥
विगलितसंसृतिवंधःप्राप्नोतिपरंपदंनरोनचिरात् ६५

इति तत्वविवेकःसमाप्तः

ग्रंथाभ्यासफलमाह इत्थमिति नरइत्थमुक्तेन प्रकारेणतत्वविवेकंतत्वस्य ब्रह्मात्मैकत्वलक्षणस्य विवेकंकोशपंचकादिविवेचनं विधायकृत्वातस्मिंस्तत्वे विधिवच्छास्त्रोक्त प्रकारेण मनः समाधाय स्थिरीकृत्याविगलितसंसृतिवंधोऽ परोक्षज्ञानेन निवृत्तसंसारवंधःसत्परंपदं निरतिशयानंदरूपं मोक्षंनचिरादवि लंवेनप्राप्नोति सत्यज्ञानानंदलक्षणं ब्रह्मैवभवतीत्यर्थः ६५ इतिश्रीमत्परमहंस परिव्राजकाचार्यश्रीभारतीतीर्थ विद्यारण्यमुनिवर्यकिंकरेण श्रीरामकृष्णाख्य विदुषा विरचितातत्वविवेकदीपिकासमाप्ता ॥




# अथ पञ्चदशी सटीक ॥

## भूत विवेक

सदद्वैतंश्रुतंयत्तत्पंचभूतविवेकतः ॥
बोद्धुंशक्यंततोभूतपंचकंप्रविविच्यते १
शब्दस्पर्शौरूपरसौगंधोभूतगुणाइमे ॥
एकद्वित्रिचतुःपंचगुणाव्योमादिषुक्रमात् २
प्रतिध्वनिर्वियच्छब्दोवायौवीसीतिशब्दनम् ॥
अनुष्णासीतःसंस्पर्शो वह्नौभुगुभुगुध्वनिः ३

मत्वाश्रीभारतीतीर्थ विद्यारण्यमुनीश्वरौ ॥ पंचभूतविवेकस्य व्याख्यानं क्रियतेमया १ सदेवसौम्येदमग्रआसीदेकमेवाद्वितीयमिति श्रुत्याजगदुत्पतेः पुरायज्जगत्कारणं,सद्वयमद्वितीयं ब्रह्मश्रुतंतस्यावाङ्मनसगोचरत्वेन स्वतो वगंतुमशक्यत्वात्तत्कार्यत्वेन तदुपाधिभूतस्य भूतपञ्चकस्य विवेकद्वारातदव बोधनायोपोद्घातत्वेन भूतपंचकविवेकंप्रतिजानीते सदद्वैतमितितत्रतावदा काशादीनां भूतानां [गुणतोभेदज्ञानायतद्गुणानाह शब्देति नन्वेतेगुणाः किंसर्वेसर्वेषामुतएकैकस्यैकैकःगुणइति विमर्शयन्नोभयथापि किंतुप्रकारांतर मस्तीत्यभिप्रायेणाह एकेति तदेवप्रकारांतरंविशदयति प्रतिध्वनिरिति आ काशेतावच्छब्द एकएवगुणः सचप्रतिध्वनिरूपः वायौशब्दस्पर्शौतत्रवायु

शब्दमनुकारेणदर्शयति विसीतिशब्दनमिति एवमुत्तरत्राप्यनुकरणशब्दनं इष्टव्यं तस्यस्पर्शमाह अनुष्णासीतःसंस्पर्शइती १ । २ । ३ ॥

उष्णस्पर्शःप्रभारूपंजलेबुलुबुलुध्वनिः ॥
शीतःस्पर्शःशुक्लरूपंरसोमाधुर्यमीरितम् ४
भूमौकडकडाशब्दःकाठिन्यंस्पर्शइष्यते ॥
निलादिकंचित्ररूपंमधुराम्लादिकोरसः ५
सुरभीतरगंधौद्वौगुणाःसम्यग्विवेचिताः ॥
श्रोत्रंत्वक्चक्षुषीजिह्वाघ्राणंचेंद्रियपंचकम् ६
कर्णादिगोलकस्थंतच्छब्दादिग्राहकंक्रमात् ॥
सौक्ष्म्यात्कार्यानुमेयंतत्प्रायोधावेद्बहिर्मुखम् ७
कदाचित्पिहितेकर्णेश्रूयतेशब्दआंतरः ॥
प्राणवायौजाठराग्नौजलपानेऽन्नभक्षणे ८

वह्नौशब्दस्पर्श रूपाणीतित्रयोगुणाः तेचक्रमेणाभिधीयंतेवह्नौभुगुभुगुध्वनिःउष्णस्पर्शःप्रभारूपंइति जलेशब्दादयोरसांताश्चत्वारोगुणास्तानाह जलेबुलुबुलुध्वनिःशीतःस्पर्श इतिभूमौशब्दादि गंधांताःपंचगुणास्तानुदाहरति भूमौकडकडाशब्दइत्यादिना सुरभीतरगंधौ द्वावित्यंतेन उक्तमर्थमुपसंहरति गुणाइति एवंगुणतोभेदमभिधायकार्यतोभेदज्ञानाय तत्कार्याणि ज्ञानेंद्रियाणितावदाह श्रोत्रमिति४ । ५ । ६ तेषांस्थानानि व्यापाराश्चदर्शयति कर्णादितिइंद्रिय सद्भावेकिंप्रमाणमित्याकांक्षायां कार्यलिंगकानुमानमित्याह सौक्ष्म्यादिति तच्चरूपोपलब्धिःकरणजन्या क्रियात्वाच्छिदिक्रियावदित्यादिद्रष्टव्यं सौक्ष्म्यादपंचीकृत भूतकार्यत्वेनदुर्लक्ष्यत्वादित्यर्थः एतेषांस्वभावमाह प्रायइति परांचिखानिव्यतृणत्स्वयंभूरितिश्रुतेरित्यर्थः ७ प्रायःशब्देनसूचितंकचित्करणानामांतरविषयग्राहकत्वंदर्शयति कदाचिदिति कदाचित्कर्णस्यपिधानेकृते सतिप्राणवायौ जाठराग्नौच विद्यमानआंतरःशब्दःश्रूयते ८ ॥

व्यज्यंतेह्यांतरस्पर्शोमीलनेचांतरंतमः ॥
उद्गारेरसगंधौचेत्पक्षाणामांतरग्रहः ९
पंचोक्त्यादानगमनविसर्गानंदकाक्रियाः ॥
कृषिवाणिज्यसेवाद्याःपंचस्वंतर्भवंतिहि १०

जलपानेऽन्नभक्षणे चांतरस्पर्शा अभिव्यज्यंतेऽभिव्यक्ताभवंति नेत्रनिमीलनेकृते आंतरंतमउपलभ्यते उद्गारेजातेरसगंधौद्वौ गृह्येतेत्यनेनप्रकारेणाक्षाणामांतरंग्रहोऽक्षाणामिति कर्त्तरिषष्ठी आंतरस्य विषयस्यग्रहोग्रहणमिंद्रियकर्तृकमांतरंविषयग्रहणं भवतीत्यर्थः ९ एवंज्ञानेंद्रियव्यापारानभिधायकर्मेंद्रियासत्ववादिनं प्रतितत्सद्भावसमर्थनाय तत्तल्लिंगभूतांस्तद्व्यापारानाह पंचइति उक्तिश्चादानंचविसर्गश्च गमनंच आनंदश्चेतिद्वंद्वसमासः उक्त्यादानगमनविसर्गानंदाख्याःपंचक्रियाःप्रसिद्धाइतिशेषः ननुकृष्यादीनां क्रियांतराणामपि सत्वात्कथंपंचेत्युक्तमित्याशंक्याह कृषीति १० ॥

वाक्पाणिपादपायूपस्थैरक्षैस्तत्क्रियाजनिः ॥
मुखादिगोलकेष्वास्तेतत्कर्मेंद्रियपंचकम् ११
मनोदशेंद्रियाध्यक्षंहृत्पद्मगोलकेस्थितम् ॥
तच्चांतःकरणंबाह्येष्वस्वातंत्र्याद्विनेंद्रियैः १२

कानितानिक्रियाजनकानींद्रियाणीन्यतआह वाक्पाणीति वागादिभिरक्षैस्तत्क्रियाजनिस्तासां क्रियाणामुत्पत्तिर्भवतीतिशेषः अत्रापिउक्तिःकरणपूर्विकाक्रियात्वादित्यादि कार्यलिंगकमनुमानंद्रष्टव्यं तस्यकर्मेंद्रियपंचकस्य स्थानान्याह मुखादीति आदिशब्देन करचरणौगुदशिश्नछिद्रेचगृह्येते ११ इदानीमुक्तदशेंद्रियप्रेरकत्वेनप्रस्तुतस्य मनसकृत्यं स्थानंच दर्शयति मनइति तस्यांतरिंद्रियत्वंसनिमित्तकमाहतच्चेति १२ ॥

अक्षेष्वर्थार्पितेष्वेतद् गुणदोषविचारकम् ॥
सत्वंरजस्तमश्चास्य गुणाविक्रियतेहितैः १३

वैराग्यंक्षांतिरौदार्यमित्याद्याःसत्वसंभवाः ॥
कामक्रोधौलोभयत्नावित्याद्यारजसोस्थिताः १४
आलस्यभ्रांतितन्द्राद्या विकारास्तमसोत्थिताः ॥
सात्विकैःपुण्यनिष्पत्तिः पापोत्पत्तिश्चराजसैः १५
तामसैर्नोभयंकिन्तु वृथायुःक्षपणंभवेत् ॥
अत्राहंप्रत्ययीकर्तेत्येवंलोकव्यवस्थितिः १६

दशेन्द्रियाध्यक्षत्वमेव विशदयति अक्षेष्विंद्रियेष्वर्थार्पितेषुविषयेषु स्थापितेषुसत्सुएतन्मनो गुणदोषविचारकमिदं समीचीनमिदमसमीचीनमित्यादिविचारकारीत्यर्थः अयंभावः आत्मनः प्रमातृत्वेनसर्वज्ञानसाधारण्याचक्षुरादीनां च रूपादिज्ञानजननमात्रेचरितार्थत्वात्तद्गुणदोषविचारस्योपलभ्यमानस्यान्यथानुपपत्त्यातत्कारणत्वेन मनोभ्युपगन्तव्यमिति मनसोवैराग्यकामाद्यनेकविधवृत्तिमत्वदर्शनायसत्वादिगुणवत्वंदर्शयतिसत्वमिति तेषांतद्गुणत्वेकारणमाह विक्रियतइतितैर्गुणैर्विक्रियतेविकारंप्राप्नोतीत्यर्थः गुणैस्तस्यविक्रियमाणत्वमेवप्रपंचयति वैराग्येति १३ । १४ वैराग्यादीनांकार्याणि विभज्यदर्शयति सात्विकैरिति१५एतेषांबुद्धिस्थत्वादन्तःकरणादीनां सर्वेषांस्वामिनमाहअत्रेति अत्राहमितिप्रत्ययवान्कर्ता प्रभुरित्यर्थः लोकेहिकार्यकारी प्रभुरित्येवं उपदिश्यते १६ ॥

स्पष्टशब्दादियुक्तेषु भौतिकत्वमतिस्फुटम् ॥
अक्षादावपितच्छास्त्रयुक्तिभ्यामवधार्यताम् १७
एकादशेन्द्रियैर्युक्त्या शास्त्रेणाप्यवगम्यते ॥
यावत्किंचिद्भवेदेतदिदंशब्दोदितंजगत् १८
इदंसर्वंपुरासृष्टेरेकमेवाद्वितीयकम् ॥
सदेवासीन्नामरूपे नास्तामित्यारुणेर्वचः १९
वृक्षस्यस्वगतोभेदः पत्रपुष्पफलादिभिः ॥
वृक्षांतरात्सजातीयोविजातीयःशिलादितः २०

तथासद्वस्तुनोभेदत्रयंप्राप्तंनिवार्यते ॥
ऐक्यावधारणद्वैत प्रतिषेधैस्त्रिभिःक्रमात् २१
सतोनावयवाःशंक्यास्तदंशस्यानिरूपणात् ॥
नामरूपेनतस्यांशौ तयोरद्याप्यनुद्भवात् २२
नामरूपोद्भवस्यैव सृष्टित्वात्सृष्टितःपुरा ॥
नतयोरुद्भवस्तस्मान्निरंशंसयथावियत् २३

एवंजगतःस्थितिमविधायेदानींतस्य भौतिकत्वज्ञानोपायमाह स्पष्टेति स्प ष्टशब्दादियुक्तेषुस्पष्टैः शब्दस्पर्शादिगुणैः सहितेषुघटादिषुवस्तुषुभूतकार्यत्वं स्पष्टमेवावगम्यते इन्द्रियादिषुकथंभूतकार्यत्वनिश्चयइत्याशंक्यागमानुमाना भ्यामित्याह अक्षादावपीति अन्नमयंहिसोम्यमनआपोमयः प्राणस्तेजोमयी वागित्यादिशास्त्रं अनुमानंच विमतानिश्रोत्रादीनिभूतकार्याणिभवितुमर्हं तिभूतान्वयव्यतिरेकानुविधायित्वात् ॥ यद्यदन्वयव्यतिरेकानु विधायितत्त त्कार्यंदृष्टं यथामृदन्वयव्यतिरेकानुविधायीघटोमृत्कार्यो दृष्टस्तथाचेमानित स्मात्तथैतितदन्वयव्यतिरेकानुविधायित्वंच षोडशकलासोम्यपुरुषइत्यादिना छान्दोग्यश्रुतौमनसः श्रुतंतद्वदन्यत्रापिद्रष्टव्यं १७ एवंभूतानिभौतिकानिच विविच्यदर्शयित्वाप्रकृतांसदेवसोम्येदमग्रआसीदित्याद्यद्वितीयब्रह्मप्रतिपादि कांश्रुतिंव्याचक्षाणस्तद्वाक्यस्थेदं यदस्यार्थमाह एकादशेइतिप्रत्यक्षादिभिः सर्वैः प्रमाणैरपिशब्दादर्थापत्यादिप्रमाणज्ञानैश्च यावत्किंचिज्जगदवगम्य ते तत्सर्वंसदेवत्यादिवाक्यस्थेनेदंपदेनाभिहितमित्यर्थः १८ एवमिदंशब्दस्या र्थमभिधाय इदानींतांश्रुतिंस्वयमेवार्थतः पठति इदमिति अरुणस्यापत्यमारु णिरुद्दालकस्तस्यवचनमित्यर्थः १९ एकमेवाद्वितीयमिति यदत्रयेणसद्वस्तु निस्वगतादिभेदत्रयं प्रसक्तंनिवारितंलोके स्वगतादिभेदत्रयंतावद्दर्शयति वृक्षस्येति २० एवमनात्मनि भेदत्रयंप्रदर्श्य सद्वस्तुन्यपिप्रसक्तंतद्भेदत्रयंश्रु तिः पदत्रयेण निवारयतीत्याह तथेतिवस्तुत्वसामान्यादनात्मनीव सद्रूपा त्मन्यपिप्रसक्तं स्वगतादिभेदत्रयमैक्यावधारणद्वैतप्रतिषेधाभिधायकैरेकमेवा द्वितीयमिति त्रिभिःपदैः क्रमेणनिवार्यत इत्यर्थः२१सद्वस्तुनस्तावन्न स्वगतः

भेदः शंकितुंशक्यते अस्य निरवयवत्वादित्याह सतइति नामरूपयोःसदवय वत्वंकिन्नस्यादित्याशंक्य सृष्टेः पुरातयोरभावान्नसदंशत्वमित्याहनामेति २२ कुतोनामरूपयोरभावइत्याशंक्याह नामरूपेति फलितमाह तस्मादिति अत्रा यंप्रयोगः सद्वस्तुस्वगतभेदशून्यं भवितुमर्हतिनिरवयवत्वाद्गगनवदिति २३॥

संदंतरंसजातीयं नवैलक्षण्यवर्जनात्॥
नामरूपोपाधिभेदं विनानैवसतोभिदा २४
विजातीयमसत्तत्तु नखल्वस्तीतिगम्यते॥
नास्यातःप्रतियोगित्वंविजातीयाद्भिदाकुतः २५
एकमेवाद्वितीयंसत्सिद्धमत्रतुकेचन॥
विह्वलाअसदेवेदं पुरासीदित्यवर्णयन् २६

माभूत्स्वगतभेदः सजातीयभेदः किंनस्यादित्याशंक्य तत्सजातीयंसदंत रमितिवक्तव्यं नतन्निरूपयितुं शक्यते ततोवैलक्षण्याभावादित्याह सदंतर मिति ननुघटसत्तापटसत्तेतिसतोभेदः प्रतिभासतेइत्याशंक्य घटाकाशमठा काशवदौपाधिकोभेदोनस्वतोभातीत्याह नामरूपइति अत्रायंप्रयोगः सद्व स्तुसजातीयभेदरहितं उपाधिपरामर्शमंतरेणाविभाव्यमानभेदत्वात् गगन वदिति २४ भवत्तुतर्हिविजातीयाद्भेदइत्याशंक्य सतोविजातीयमसत्तस्यास त्वेनैवप्रतियोगित्वासम्भवेनतत्प्रतियोगिकोपि भेदोनास्तीत्याह विजातीयेति २५फलितमाह एकमेवेतिइदानींस्थूणानिखननन्यायेनसदद्वैतमेवद्दढयितुंपूर्व पक्षमाह अत्रत्विति २६॥

मग्नस्याब्धौयथाऽक्षाणिविह्वलानितथास्यधीः॥
अखण्डैकरसंश्रुत्वानिःप्रचाराबिभेत्यतः २७
गौडाचार्यानिर्विकल्पे समाधावन्ययोगिनाम्॥
साकारब्रह्मनिष्ठानामत्यंतंभयमूचिरे २८
अस्पर्शयोगोनामैषदुर्दर्शःसर्वयोगिभिः॥
योगिनोबिभातिह्यस्मादभयेभयदर्शिनः २९

विह्वलत्वेदृष्टांतमाह मग्नस्येति दार्ष्टांतिकेयोजयति तयेति अस्यास द्वादिनोजातावेकवचनं धीरंतःकरणमखण्डैकरसंवस्तुश्रुत्वानिःप्रचारासाका रवस्तुनी वा खण्डैकरसेवस्तुनि प्रचाररहितासती अतोस्माद्वस्तुनोविभेति २७ उक्तार्थेआचार्यसंमतिंदर्शयति गौडाचार्येति २८ केनवाक्येनोक्तवंत इत्या कांक्षायांतदीयंवार्तिकमेवपठति अस्पर्शेति योयमस्पर्शयोगाख्यो निर्विक ल्पकः समाधिः एषसर्वयोगिभिः साकारध्याननिष्ठैर्दुर्दर्शः दुःखेनद्रष्टुंयोग्यः दुष्प्राप्यइत्यर्थः तत्रोपपत्तिमाहयोगिनइति हियस्मात्कारणाद्योगिनःपूर्वोक्त द्वैतदर्शिनः अभये भयशून्येसमाधौनिर्जनेदेशे बालाइव भयदर्शिनो भय हेतुत्वं कल्पयन्तः तस्माद्योगाद्भीतिंप्राप्नुवन्ति २६ ॥

भगवत्पूज्यपादाश्चशुष्कतर्कपटूनमून् ॥
आहुर्माध्यमिकान्भ्रांतानचिंत्येस्मिन्सदात्मनि ३०
अनादृत्यश्रुतिंमौर्ख्यादिमेबौद्धातपस्विनः ॥
आपेदिरेनिरात्मत्वमनुमानैकचक्षुषः ३१
शून्यमासीदितिब्रूषेसयोगंवासदात्मताम् ॥
शून्यस्यनतुतद्युक्तमुभयंव्याहतत्वतः ३२

श्रीमदाचार्यैरप्येतदभिहितमित्याह भगवदिति ३० तद्वार्तिकंपठति अनादृत्येति ३१ इदानीमसद्वादंविकल्प्यदूषयति शून्येति शून्यमासीदि त्यनेनवाक्येन शून्यस्यसत्तातातियोगंवा सद्रूपतांवा ब्रूषेइति विकल्पार्थः तदुभयंसतासंबंधसद्रूपत्वलक्षणम् शून्यस्यव्याहतत्वान्नयुज्यतइत्यर्थः ३२ ॥

नयुक्तस्तमसासूर्योनापिचासौतमोमयः ॥
सच्छून्ययोर्विरोधित्वाच्छून्यमासीत्कथंवद ३३
वियदादेर्नामरूपेमाययासुविकल्पिते ॥
शून्यस्यनामरूपेचतथाचेज्जीव्यतांचिरम् ३४

व्याहतत्वमेवदृष्टांतपूर्वकंद्रढयति नयुक्तइति ३३ ननुभवन्मतेपिवियदादी नां निर्विकल्पेब्रह्मणिसत्वंव्याहतमित्याशंक्याह वियदादेरिति तर्हिशून्यस्या

पिनामरूपेसद्वस्तुनिकल्पितेइति वदतोबौद्धस्यापिसिद्धांतइत्यभिप्रायेणाह
शून्यस्येति ३४ ॥

सतोपिनामरूपेद्वेकल्पितेचेत्तदावद ॥
कुत्रेतिनिरधिष्ठानोनभ्रमःक्वचिदीक्ष्यते ३५
सदासीदितिशब्दार्थभेदेवैगुण्यमापतेत् ॥
अभेदेपुनरुक्तिःस्यात्मैवंलोकेतथेक्षणात् ३६

ननुतर्हिशून्यस्यैवसद्वस्तुनोपिनामरूपेद्वेकल्पितेएवांगीकर्त्तव्येभवन्मतेवा
स्तवयोर्नामरूपयोरभावादितिशंकते सतोपीतिविकल्पासहत्वादयं पक्षएवानु
पपन्नइत्यभिप्रायेणपरिहरतितदेतिअयमभिप्रायः सतोनामरूपेकिंसतिकल्पि
तेउतासतिअथवाजगतिनाद्यः अन्यस्यरजतादेर्नामरूपयोः अन्यत्रशुक्तिका
दावारोपदर्शनात्सतोनामरूपयोःसत्येवकल्पनायोगात्नद्वितीयः असतोनि
रात्मकस्यचाधिष्ठानत्वायोगात् नतृतीयः सतउत्पन्नस्यजगतः सन्नामरूपक
ल्पनाधिष्ठानत्वानुपपत्तेरितिमाभूदधिष्ठानंअनयोः कल्पना किन्नस्यादित्या
शंक्याह निरधिष्ठानइतिनन्वसदेवेदमग्रआसीदित्यत्रयथाव्याघातउक्तः तथा
सदेवसोम्येदमग्रआसीदित्यत्रापिदोषोस्तीतिशंकते सदासीदितीति तथाहि
सदासीदितिशब्दभेदयोरर्थभेदोऽस्ति वा नवास्तिचेदद्वैतहानिर्नास्तिचेत्पुनरु
क्तिःस्यात् अतःसदासीदित्यनुपपन्नइतिद्वितीयंपक्षमादायपरिहरतिमैवमिति
पुनरुक्तिदोषस्यकः परिहारइत्याशंक्याहलोकइति ३५ । ३६ ॥

कर्त्तव्यंकुरुतेवाक्यंब्रूतेधार्यस्यधारणम् ॥
इत्यादिवासनाविष्टंप्रत्यासीत्सदितीरणम् ३७
कालाभावेपुरेत्युक्तिःकालवासनयायुतम् ॥
शिष्यंप्रत्येवतेनात्रद्वितीयंनहिशंक्यते ३८
चोद्यंवापरिहारोवाक्रियतांद्वैतभाषया ॥
अद्वैतभाषयाचोद्यंनास्तिनापितदुत्तरम् ३९

लोकेएवंविधेषुप्रयोगेषुपुनरुक्त्यभावः कुत्रदृष्टइत्याशंक्याह कर्त्तव्यमि

ति भवत्वेवंलोकेश्रुतौकिमायातमित्यतआह इत्यादीति ३७ नन्वद्वितीय वस्तुनिभूतकालाभावादग्रेआसीदित्युक्तिरनुपपन्नेत्याशंक्याह कालेति नन्वु जगदुत्पत्तेः पुराजगदभावेनसद्वितीयत्वं ब्रह्मणइत्याशंक्य श्रुतिप्रवृत्तेर्द्वैतवा सनाविष्टश्रोतृप्रतिबोधनार्थत्वात् नातिशंकनीयमित्याह तेनेति ३८ इदानीं सिद्धांतरहस्यमाह चोद्यमिति व्यवहारदशायांचोद्यादिकर्तव्यं परमार्थतस्त्व द्वैतमेवतत्वमित्यर्थः ३९ ॥

तदास्तिस्तिमितगंभीरंनतेजोनतमस्ततम् ॥
अनाख्यमनभिव्यक्तंसत्किंचिदवशिष्यते ४०
ननुभूम्यादिकंमाभूत्परमाण्वंतनाशतः ॥
कथंतेवियतोऽसत्वंबुद्धिमारोहतीतिचेत् ४१

परमार्थतोद्वैताभावेस्मृतिंप्रमाणयति तदेतिस्तिमितंनिश्चलंगंभीरंदुरवगाहं मनसाविषयीकर्तुमशक्यंनतेजस्तेजस्त्वानधिकरणं नतमस्तमोविलक्षणं अ नावरणस्वभावंततंव्याप्तं अनाख्यंआख्यातुमशक्यमनभिव्यक्तंचक्षुरादिभि रप्यविषयीकृतं सच्छून्यविलक्षणं अतएवकिंचिदिदंतयानिर्देष्टुमशक्यमवशि ष्यतेद्वैतनिषेधावधित्वेनावतिष्ठतइत्यर्थः ४० ननुजनिमत्वेनअनित्यस्यभूम्या देरसत्वमस्तुनित्याकाशस्यासत्वं कथमंगीक्रियतइतिशंकतेनन्विति ४१ ॥

अत्यंतंनिर्जगद्व्योमयथातेबुद्धिमाश्रितम् ॥
तथैवसन्निराकाशंकुतोनाश्रयतेमतिम् ४२
निर्जगद्व्योमदृष्टंचेत्प्रकाशतमसीविना ॥
क्वदृष्टंकिंचतेपक्षेनप्रत्यक्षंवियत्खलु ४३

दृष्टांतावष्टंभेनपरिहरति अत्यंतमिति अत्यंतंनिर्ज्जगज्जगन्मात्ररहित मित्यर्थः ४२ नहिदृष्टेरनुपपन्नमितिन्यायमाश्रित्यचोदयति निर्ज्जगदितिद र्शनमेवासिद्धमितिपरिहरति प्रकाशयतिअपसिद्धांतोपीत्याहकिंचेति ४३॥

सदस्तुशुद्धंत्वस्माभिर्निश्चितैरनुभूयते ॥
तूष्णींस्थितौनशून्यत्वंशून्यबुद्धेश्चवर्जनात् ४४

सद्बुद्धिरपिचेन्नास्तिमास्त्वस्यस्वप्रभत्वतः ॥
निर्मनस्कत्वसाक्षित्वात्सन्मात्रंसुगमंनृणाम् ४५
मनोजृंभणराहित्येयथासाक्षीनिराकुलः ॥
मायाजृंभणतःपूर्वंसतथैवनिराकुलम् ४६

ननुदर्शनाभावः सद्वस्तुन्यपिसमानइत्याशंक्यतस्यसर्वानुभवसिद्धत्वान्नैवमित्याहसद्वस्त्विति ननुतूष्णींभावेशून्यमेवइतरस्यकस्यापिप्रतीत्यभावादित्याशंक्यशून्यस्यापिशून्यप्रतीत्यभावाच्छून्यमपिनसंभवतीत्याह नशून्यत्वमिति ४४ ननुतर्हिसद्बुद्ध्यभावात्सत्वमपिनघटतइतिशंकते सद्बुद्धीतितस्यस्वप्रकाशत्वान्नतद्बुद्ध्यभावोऽनिष्टइतिपरिहरति मास्त्वस्येति ननुस्वगोचरबुद्ध्यभावेकथंसद्वस्त्ववगंतुंशक्यतइत्यतआह निर्मनस्कत्वेति ४५ एवंनिःप्रपंचस्यसाक्षिणस्तूष्णींस्थितौभानंप्रदर्श्यैतद्दृष्टांतवलेनसृष्टेः पुरापिसद्वस्तुतथावगंतुंशक्यतइत्याह मनइति ४६ ॥

निस्तत्वाकार्यगम्यास्यशक्तिर्मायाऽग्निशक्तिवत् ॥
नहिशक्तिंकचित्कैश्चिद्बुध्यतेकार्यतःपुरा ४७
नसद्वस्तुसतःशक्तिर्नहिवह्नेःस्वशक्तिता ॥
सद्विलक्षणतायांतुशक्तेःकिंतत्वमुच्यताम् ४८
शून्यत्वमितिचेच्छून्यंमायाकार्यमितीरितम् ॥
नशून्यंनापिसद्यादृक्तादृक्त्वमितीहिष्यताम् ४९

मायायाःकिंलक्षणमित्यतआह निस्तत्वेति निस्तत्वाज्जगत्कारणभूतात्सद्वस्तुनःपृथक्सत्वरहिताकार्यगम्या वियदादिकार्यलिंगगम्या अस्यसद्वस्तुनःशक्तिर्वियदादिकार्यजननसामर्थ्यंमायेत्युच्यते वस्तुस्वरूपातिरिक्तशक्तिसद्भावेदृष्टान्तमाह अग्नीति यथाऽग्न्यादिस्वरूपातिरिक्तं स्फोटादिकार्यलिंगगम्यवह्न्यादिकार्यनिष्ठंसामर्थ्यमस्तितद्वदित्यर्थः शक्तेःकार्यलिंगगम्यत्वंव्यतिरेकमुखेनदृढयति नहिशक्तिरिति ४७ एवंशक्तेःकार्यलिंगगम्यत्वमुपपाद्यनिस्तत्वरूपतामुपपादयति नसद्वस्त्विति अयमभिप्रायः सद्वस्तुनःशक्तिःकिं

सतीउतासतीनतावत्सतीतथात्वेसतोभिन्नत्वेन तच्छक्तित्वायोगाङ्कार्थेदृष्टान्तमाह नहिवह्नेरिति द्वितीयेपिकिन्नरविषाणतुल्माउतसद्विलक्षणेतिविकल्पाभिप्रायेणपृच्छति सद्विलक्षणेति ४८ तत्राद्यंपक्षमनूद्यदूषयति शून्येति शून्यस्यनामरूपेचतथाचेज्जीव्यताम् चिरमित्यत्रेत्यर्थः तस्माद्वितीयपक्षः परिशिष्यतइत्याह नशून्यमिति मायास्वरूपंसत्वासत्वाभ्यां निर्वचनानर्हमित्यभिप्रायः ४९ ॥

नासदासीन्नोसदासीत्तदानींकिंत्वभूत्तमः ॥
सद्योगात्तमसःसत्वंनस्वतस्तन्निषेधनात् ५०
अतएवद्वितीयत्वंशून्यवन्नहिगण्यते ॥
नलोकेचैत्रतच्छक्त्योर्जीवितंलिख्यतेपृथक् ५१
शक्त्याधिक्येजीवितंचेद्वर्द्धतेतत्रवृद्धिकृत् ॥
नशक्तिःकिन्तुतत्कार्यं युद्धकृष्यादिकंतथा ५२
सर्वथाशक्तिमात्रस्य नपृथग्गणनाक्वचित् ॥
शक्तिकार्यंतुनैवास्ति द्वितीयंशंक्यतेकथम् ५३

अस्मिन्नर्थेश्रुतिंप्रमाणयति नासदिति तमआसीत्तमसागूढमग्रइत्यादिश्रुतिःप्रमाणमित्यर्थः तर्हितमआसीदिति कथंसत्वमुच्यतेइत्यतआह सयोगादितिकुतइत्यतआह तन्निषेधनादिति ५० फलितमाह अतएवेतियतःस्वतः सत्वं मायायाःनास्ति अतःशून्यस्येवमायायाअपि द्वितीयत्वंनगण्यतेहिनैवाहियतइत्यर्थः अमृतस्यद्वितीयत्वानंगीकारेदृष्टांतमाह नलोकेति ५१ ननुशक्त्याधिक्येजीविताधिक्यंदृश्यते अतःशक्तेरपिपृथक्जीवितत्वमस्तीति शंकते शक्त्येति नशक्तिर्जीवितवर्द्धनेकारणमपितुतत्कार्यंयुद्धकृष्यादीतिपरिहरति तत्रेतिदार्ष्टांतिकेयोजयतितथेति ५२ माभूच्छक्त्यासद्वितीयत्वंसतोपितुतत्कार्येणतद्भवत्येवेत्याशंकातस्यतदानीमसत्वातेनापि नसद्वितीयत्वमित्याह शक्तिकार्यंत्विति ५३ ॥

नकृत्स्नंब्रह्मवृत्तिःसाशक्तिःकिंत्वेकदेशभाक् ॥

घटशक्तिर्यथाभूमौस्निग्धमृद्येववर्त्तते ५४
पादोऽस्यसर्वाभूतानित्रिपादस्ति स्वयंप्रभ ॥
इत्येकदेशवृत्तित्वंमायायावदतिश्रुतिः ५५
विष्टभ्याहमिदंकृत्स्नमेकांशेनस्थितोजगत् ॥
इतिकृष्णोऽर्जुनायाहजगतस्त्वेकदेशताम् ५६
सभूमिंविश्वतोवृत्वाअत्यतिष्ठद्दशांगुलम् ॥
विकारावर्तिचात्रास्तिश्रुतिसूत्रकृतोर्वचः ५७
निरंशेप्यंशमारोप्यकृत्स्नेंऽशेवेतिपृच्छतः ॥
तद्भाषयोत्तरंब्रूतेश्रुतिःश्रोतृहितैषिणी ५८

ननुसच्छक्तिःसतिसर्वत्रवर्त्ततेउतैकदेशेनाद्यः मुक्तैःप्राप्यब्रह्माभावप्रसंगात नद्वितीयः निरंशत्वविरोधादित्याशंक्याद्योनंगीकारत्वाद्वितीयेपरिहारोवच्य तइत्यभिप्रायेणाह नकृत्स्नेति एकदेशवृत्तौदृष्टांतमाह घटेति ५४ शक्तेरेकदे शवृत्तित्वेप्रमाणमाह पादोस्येति ५५ नकेवलंश्रुतिरेवस्मृति रप्यस्तीत्याह वि ष्टभ्येति ५६ इदानींनिर्मायस्वरूपसद्भावेप्रमाणमाह सभूमिमिति विकाराऽव र्त्तिचतथाहिस्थितमाहेतिसूत्रकारवचनमित्यर्थः ५७ तर्हिनिरंशत्वेविरोधइत्य स्यकः परिहारइत्याशंक्यवास्तवनिरंशत्वातभ्युपगमात्र विरोधइत्यभिप्राये णोदाहृतश्रुत्यभिप्रायमाह निरंशेपीति ५८ ॥

सतत्वमाश्रिताशक्तिःकल्पयेत्सातिविक्रियाः ॥
वर्णाभित्तिगताभित्तौचित्रंनानाविधंयथा ५९
आद्योविकारआकाशःसोवकाशःस्वरूपवान् ॥
आकाशोस्तीतिसत्ततमाकाशेप्यनुगच्छति ६०
एकस्वभावंसत्ततमाकाशोद्विस्वभावकः ॥
नावकाशःसतिव्योम्निसचैषोपिद्वयंस्थितम् ६१
यद्वाप्रतिध्वनिर्व्योम्नोगुणोनासौसतीक्षते ॥

व्योम्निद्वौसद्ध्वनीतेनसदेकंद्विगुणंवियत् ६२

यदर्थंब्रह्मणिमायासमर्थितातदिदानीमाह सतत्वमितिविक्रियाविविधत्वे नक्रियंतइतिविक्रियाः कार्यविशेषाइत्यर्थः तत्रदृष्टांतमाह वर्णेति वर्णारक्ता पीतादयोधातुविशेषाः ५९ अत्रप्रथमंकार्यविशेषंदर्शयति आद्येइति तत्स्व रूपमाहसोवकाशइति आकाशस्यब्रह्मकार्यत्वेहेतुमाह आकाशइति ६० ततः किमित्यतआह एकेति उक्तमर्थंविशदयति नावकाशइति सतिसद्वस्तुन्यव काशोनास्तितुसत्स्वभावएकएवआकाशेतु सचसत्स्वभावश्चएषोप्यवका शस्वभावोपीतिद्वयं स्थितंविद्यतइत्यर्थः ६१ सदाकाशयोरेकद्विस्वभावत्वंप्र कारांतरेणव्युत्पादयति यद्वेति प्रतिध्वनिर्व्योम्नोगुणइत्युपपादितमधस्तात असौप्रतिध्वनिःसतिसद्वस्तुनिनेत्यतेनोपलभ्यतेव्योम्निनुसध्वनीसच्छब्दौ उभावप्युपलभ्येतेतेनकारणेनसदेकस्वभावंयद्विगुणंद्विस्वभावकमित्यर्थः६२।

याशक्तिःकल्पयेद्व्योमसासद्व्योम्नोरभिन्नतां॥
आपाद्यधर्मधर्मित्वं व्यत्ययेनावकल्पयेत् ६३
सतोव्योमत्वमापन्नं व्योम्नःसत्तांतुलौकिकाः॥
तार्किकाश्चावगच्छंति मायायाउचितंहितत् ६४
यद्यथावर्ततेतस्य तथात्वंभातिमानतः॥
अन्यथात्वंभ्रमेणेति न्यायोयंसर्वलौकिकः ६५

नन्वाकाशस्यसद्ब्रह्मकार्यत्वे आकाशस्य सतेतिसत आकाशधर्मताकुतः प्रतिभातीत्याशंक्याह याशक्तिरिति यामायासद्वस्तुनि आकाशंकल्पयतिसा प्रथमतः सद्व्योम्नोरभेदंकल्पयतिपश्चाद्धर्मधर्मिभाववैपरीत्येवकल्पयति अत आकाशस्य सतेतिभानमुपपद्यत इत्यर्थः ६३ मायया वैपरीत्यंकथं कृतमित्या शंक्याहसतइति वस्तुतत्वविचारेक्रियमाणेमृदोघटरूपत्वमिवसतोव्योमत्वमा पन्नंसद्वस्तुनआकाशरूपत्वंप्राप्तंलौकिकाःप्राणिनःशास्त्रेषुमध्येतार्किकाश्चत द्वैपरीत्येन व्योम्नोगगनस्यधर्मिणः सत्तासद्रूपत्वंधर्मंजातिंचावगच्छंतिजानं तिननु अन्यस्यान्यथा प्रतीतिरनुपपन्नेत्याशंक्याह माययाइति तद्विपरीतद

र्शनहेतुत्वंमायायायुक्तमित्यर्थः६४ मायायाविपरीत प्रतीतिहेतुत्वंलौकिकन्याय प्रदर्शनेनस्पष्टीकरोति यद्यथेति यच्छुक्त्यादियथायेवमुक्तिकादिरूपेणवर्त्तते तस्यतथात्वंशुक्त्यादिरूपत्वं प्रमाणतःस्फुरतिअन्यथात्वंरजतादिरूपत्वं तद्भ्रमेणभ्रांत्याप्रतिभातीत्ययंन्यायः सर्वलोकप्रसिद्धमित्यर्थः ६५ ॥

एवंश्रुतिविचारात्प्राग्यद्यथावस्तुभासते ॥
विचारेणविपर्येति तत्वताश्चिंत्यतांवियत् ६६
भिन्नेवियत्सतीशब्द भेदाद्बुद्धेश्चभेदतः ॥
वाय्वादिष्वनुवृत्तंस न्नतुव्योमेतिभेदधीः ६७
सद्वस्त्वधिकवृत्तित्वाद्धर्मिव्योम्नस्तुधर्मता ॥
धियासतःपृथक्कारे ब्रूहिव्योमकिमात्मकम् ६८

एवंभ्रांत्याविपरीत प्रतिभानन्दर्शयित्वातन्निवृत्त्युपायमाह एवमिति एवमुक्तेनप्रकारेण श्रुतिविचारात्प्राक्श्रुतितत्वार्थ विचारात्पूर्वयद्वस्तुसद्रूपंब्रह्मभ्रांत्यायथायेनगगनादिरूपेणवर्तते तच्छ्रुत्यर्थपर्यालोचनेन विपर्येतिगगनादिभावंपरित्यज्य सद्रूपंब्रह्मैवभवति ततःश्रुतिविचारेण वस्तुयथात्म्यदर्शनसंभवन्तद्वियच्चिंत्यतां विचार्यतामित्यर्थः ६६ विचारस्वरूपमेवदर्शयति भिन्नेइतिप्रतिज्ञातार्थेहेतुमाह शब्देति वियत्सच्छब्दयोरपर्यायत्वादित्यर्थः हेत्वंतरमाह बुद्धेश्चेति तमेवहेतुंविशदयति वाय्वादिष्विति सद्वाय्वादिषुभूतेषुसन्वायुःसत्तेजइत्येवं प्रकारेणानुवृत्तंभासते व्योमतुनैवंभासतइतियज्ज्ञानंसाभेदधीः भेदबुद्धिरित्यर्थः ६७ एवंसदाकाशयोर्भेदं प्रसाध्यव्योम्नः सत्तेतिभ्रांत्याप्रतितस्यधर्मिधर्मभावस्य विचारेणव्यत्ययंदर्शयति सद्वस्त्वेतिरूपरसादिष्वनुवृत्तस्य द्रव्यस्येवआकाशवाय्वादिष्वनुवृत्तस्य सतोधर्मित्वंरसादिभ्योव्यावृतस्य रूपस्येववाय्वादिभ्योव्यावृतस्य नभसोधर्मत्वमित्यर्थः ननुतर्हिघटाद्भिन्नस्यरूपस्य यथावास्तवत्वंतथा सतोभिन्नस्यनभसोपिस्यादित्या शंक्यसद्व्यतिरिक्तस्य नभसोद्वर्निरूपत्वात्नैवमित्याहधियेति ६८ ॥

अवकाशात्मकंतच्चेदसत्तादितिचिन्त्यताम् ॥

भिन्नंसतोऽसच्चनोतिवाक्षिवेद्याहातिस्तव ६९
भातीतिचेद् भातुनामभूषणंमापिकस्यतत् ॥
यदसद् भासमानंतन्मिथ्यास्वप्नगजादिवत् ७०
जातिव्यक्तीदेहिदेहौ गुणद्रव्येयथापृथक् ॥
वियत्सतोस्तथैवास्तु पार्थक्यंकोत्रविस्मयः ७१
बुद्धोपिभेदोनोचित्ते निरूढंयातिचेत्तदा ॥
अनैकाग्र्यात्संशयाद्वारूढ्यभावोस्यतेवद ७२

दुर्निरूपत्वमसिद्धमितिशंकते अवकाशेति तर्हिसतोविलक्षणत्वादसदेव स्यादिति परिहरति असदिति सतोविलक्षणस्यासत्वंनास्तीति वदतोदोषमाह भिन्नमिति ६९ असत्वेभानंनस्यादित्या शंक्यतुछविलक्षणत्वात् भानंनवि रुध्यतइत्याह भातीतिचेदिति अविरोधंदर्शयितुं मिथ्यावस्तुनोलक्षणं सदृष्टां तमाह यदसदिति यद्वस्तुस्वरूपेणाविद्यमानमपिभासते तत्स्वप्नगजादिव न्मिथ्येत्यर्थः ७० ननुनियमेनसहोपलभ्यमानयोर्भेदो नदृष्टचरइत्याशंक्याह जातीति ७१ भेदोयद्यपिबुध्यतेतथापि निश्चितोनभवतीतिशंकते बुद्धोपीति तस्यपरिहारंवक्तुं निश्चयाभावेकारणंपृच्छति अनैकाग्र्यादिति तेतवअस्य रूढ्यभावबुद्धौभेदस्यारोहाभावः अनैकाग्र्यात्संशयाद्वाभवतीत्यर्थः ७२ ॥

अप्रमत्तोभवध्याना दाद्येऽन्यस्मिन्विवेचनम् ॥
कुरुप्रमाणयुक्तिभ्यां ततोरूढतमोभवेत् ७३
ध्यानात्मानाद्युक्तितोपि रूढेभेदेवियत्सतोः ॥
नकदाचिद्वियत्सत्यं सद्वस्तुछिद्रवन्नच ७४
ज्ञस्यभातिसदाव्योम निस्तत्वोल्लेखपूर्वकम् ॥
सद्वस्त्वपिविभात्यस्य निच्छिद्रत्वपुरःसरम् ७५
वासनायांप्रवृद्धायां वियत्सत्यत्ववादिनम् ॥
सन्मात्राबोधयुक्तंच दृष्ट्वाविस्मयतेबुधः ७६

आद्येपरिहारमाह अप्रमतइति आद्येप्रथमेविकल्पेध्याना तत्रप्रत्ययैकतान ताध्यानमित्युक्तलक्षणादप्रमतो भवसावधानमनाभवेतिथाचत् द्वितीयेपरिहा रमाहअन्यास्मिन्निति ततःकिमित्यतआह ततइति ७३ ततोपिकिमित्यतआह ध्यानादिति ध्यानंपूर्वोक्तलक्षणंमानं भिन्नेवियत्सतीशव्दभेदाद्बुद्धेश्च भेदतः इत्यत्रोक्तंयुक्तिस्तुत्यस्त्वधिकवृत्तित्वादित्यादावुक्ता एतैध्यानादिभिर्वियत्सतो र्भेदेचित्तेनिरूढंयातेसति विद्यत्कदाचिन्नसत्यं किन्तुसर्वदामिथ्यैवावभासते सद्वस्त्वपिछिद्रवदवकाश वन्नचनैवंभवतीतिशेषः ७४ वियत्सत्वविवेचनफल माह ज्ञस्यभातीति ७५ वियन्मिथ्यात्वंसतोवस्तुत्वंच सदाचिंतयतः किंभवती त्यतआह वासनायामिति बुद्धोवियत्सतोस्तत्ववेत्तागगनस्यसत्यत्वं श्रूयाणं निरवकाशसद्वस्त्ववबोधरहितंच दृष्ट्वाविस्मयंप्राप्नोतीत्यर्थः ७६ ॥

एवमाकाशमिथ्यात्वेसत्सत्यत्वेचवासिते ॥
न्यायेनानेनवाय्वादेःसद्वस्तुप्रविविच्यताम् ७७
सद्वस्तुमेकदेशस्थामायातत्रैकदेशगम् ॥
वियत्तत्राप्येकदेशगतोवायुःप्रकल्पितः ७८
शोषस्पर्शौगतिर्वेगवायुधर्माइमेमताः ॥
त्रयःस्वभावाःसन्मायाव्योम्नांयेतेपिवायुगाः ७९
वायुरस्तीतिसद्भावःसतोवायौपृथक्कृते ।
निस्तत्वरूपतामायास्वभावोव्योमगोध्वनिः ८०
सतोनुवृत्तिःसर्वत्रव्योम्नोनेतिपुरेरितम् ॥
व्योमानुवृत्तिरधुनाकथंनव्याहतंवचः ८१

उक्तमाद्यमन्यत्राप्यतिदिशति एवमिति ७७ नन्वामाशकार्यस्य वायोरका णभूतेन सद्वस्तुनातादात्म्य प्रतीत्ययोगात्सतो विवेचनमप्रयोजकमित्याश क्य साक्षात्संवंधाभावेपि परंपरयासंवंधोस्तीत्याह सद्वस्तुनीति ७८ एवं द्वायोः संवंधंप्रदर्श्यतयोर्धर्मतोभेदज्ञानाय वायौप्रतीयमानधर्मानाह शो स्पर्शाविति एवंभातिस्विकान्धर्माननभिधायकारणतःप्राप्तांस्तानाह त्रयइ

सन्मायाव्योम्नांयेत्रयःस्वभावाः शीलविशेषाधर्मास्तेपि वायुगावायौविद्यं तइत्यर्थः ७९ केतेधर्माइत्यतआह वायुइति वायुरस्तीति व्यवहारहेतुसद्रूपत्वं सद्वस्तुनोधर्मएकःवायौसद्वस्तुनो विवेचितेसति यन्निस्तत्वरूपत्वं समायाधर्मोद्वितीयः शब्दोव्योम्नःसकाशादागतोधर्मस्तृतीयइत्यर्थः ८० ननुव्योमविवेचनप्रस्तावे वाय्वादिष्वनुवृत्तं सन्ननुव्योमेतिभेदधीरित्यत्रवाय्वादावाकाशानुवृत्तिर्निवारिता इदानींव्योमानुवृत्तिरभिधीयते अतःपूर्वोत्तरविरोधइति शंकते सतइति व्योमानुवृत्तिरधुनोच्यत इतिशेषः ८१ ॥

छिद्रानुवृत्तिर्नेतीति पूर्वोक्तिरधुनात्वियम् ॥
शब्दानुवृत्तिरेवोक्ता वचसोव्याहतिःकुतः ८२
ननुसद्वस्तुपार्थक्य दसत्वंचेतदाकथम् ॥
अव्यक्तमायावैषम्यादमायामयतायिनो ८३
निस्तत्वरूपतैवात्र मायात्वस्यप्रयोजिका ॥
साशक्तिकार्ययोस्तुल्याव्यक्ताव्यक्तत्वभेदिनोः ८४
सदसत्वविवेकस्य प्रस्तुतत्वात्सचिंत्यताम् ॥
असतोवान्तरोभेदः आस्तान्तच्चिंतयात्रकिम् ८५
सद्वस्तुब्रह्मशिष्टोंशो वायुर्मिथ्यायथावियत् ॥
वासयित्वाचिरंवायोर्मिथ्यात्वंमरुतंत्यजेत् ८६

पूर्वमवकाशलक्षणस्वरूपानुवृत्तिर्निवारिताइदानींधर्मानुवृत्तिरेवाभिधीयते नस्वरूपानुवृत्तिरतोन व्याहतिरिति परिहरतिछिद्रेति ८२ ननुवायोःसद्ब्रह्मविलक्षणत्वादसत्वलक्षणं मायामयत्वंयद्युच्यते तर्ह्यव्यक्तस्वरूप मायावैलक्षण्याद मायामयत्वमपि किन्नस्यादिति चोदयति नन्विति ८३ नाव्यक्तत्वंमायामयत्वे प्रयोजकं किंतुनिस्तत्वरूपत्वंततु मायायामिववाय्वादावप्यस्तीतिन मायामयत्वहानिरिति परिहरति निस्तत्वेति ८४ ननुशक्तिकार्ययोरुभयोरपि निस्तत्वरूप तायामविशिष्टायां व्यक्ताव्यक्तत्वलक्षणो भेदःकुतइत्याशंक्यतद्विचारःप्रस्तुतानुपयुक्त इतिपरिहरति सदसत्वेति असतोमाया

तत्कार्यरूपस्यावांतरभेदो व्यक्ताव्यक्तत्व रूपइत्यर्थः ८५ फलितमाह सद्वस्ति
तिं वायौयःसदंशस्तद्ब्रह्म रूपंशिष्टोंशो निस्तत्वादिर्वायोःस्वरूपं सचवायुः
निस्तत्वरूपत्वादेवआकाशवन्मिथ्या इत्थंवायोर्मिथ्यात्वं चिरंवासयित्वाम
रुतंत्यजेत् मरुत्सत्यइति वुद्धिंत्यजेदित्यर्थः ८६ ॥

चिंतयेद्वह्निमप्येवंमरुतोन्यूनवर्तिनम् ॥
ब्रह्मांडावरणेष्वेषान्यूनाधिकविचारण ८७
वायोर्दशांशतोन्यून्योवह्निर्वायौप्रकाल्पितः ॥
पुराणोक्तंतारतम्यंदशांशैर्भूतपंचके ८८
वह्निउष्णप्रकाशात्मापूर्वानुगतिरत्रच ॥
अस्तिवह्निःसनिस्तत्वशब्दवान्स्पर्शवानपि ८९
सन्मायाव्योमवाय्वंशैर्युक्तस्याग्नेर्निजोगुणः ॥
रूपंतत्रसतःसर्वमन्यद्वुध्याविविच्यताम् ९०

वायावुक्तं विचारंतेजस्यप्यातिदिशतिचिंतयेदिति ननुसद्वस्तुन्येक देशस्था
मायातत्रेत्यादिना वियदादीनां न्यूनाधिकभावउक्तः सलोकेन क्वापिदृश्यत
इत्याशंक्याह ब्रह्माण्डेति ८७ वायोः किपर्तांशैनन्यूनो वह्निरित्यतआह वा
योरिति तस्यवास्तवत्वशंकां वारयति वायाविति नन्वयंन्यूनाधिकभावः स्व
कपोलकल्पित इत्याशंक्याह पुराणोक्तमिति ८८ वह्नेःस्वरूपमाह वह्निरिति
अत्रापिचायाविवकारणधर्मा अनुगताइत्याह पूर्वेति केतेधर्माइत्याकांक्षाय
माह अस्तीति ८९ एवमग्नौकारणधर्मानुगत्यनुवाद पूर्वकंस्वकीयंधर्मंदर्श
यति सन्मायेति इत्थंसविशेषण वह्निस्वरूपंव्युत्पाद्य इदानींसद्वस्तुनोवह्नि
विनक्ति तत्रेति तत्रतेपुमध्येसतः सद्वस्तुनोन्यत्सर्वधर्मजातं मिथ्येतिवुद्ध्या
विविच्यतां पृथक्क्रियतामित्यर्थः ९० ॥

सतोविवेचितेवह्नौ मिथ्यात्वेसतिवासिते ॥
आयोदशांशतोन्यूनाः कल्पिताइतिचिंतयेत् ९१

संत्यापोमूःशून्यतत्वाः सशब्दस्पर्शसंयुताः ॥
रूपवंत्योन्यधर्मानुवृत्त्यास्वीयोरसोगुणः ९२
सतोविवेचितास्वप्सु तन्मिथ्यात्वेचवासिते ॥
भूमिर्दशांशतोन्यूना कल्पिताश्चितिचिंतयेत् ९३
अस्तिभूस्तत्वशून्यास्यां शब्दस्पर्शौसरूपकौ ॥
रसश्चपरतोगंधो नैजःसत्ताविविच्यताम् ९४
पृथक्कृतायांसत्तायां भूमिर्मिथ्यावशिष्यते ॥
भूमेर्दशांशतोन्यूनं ब्रह्मांडंभूमिमध्यगम् ९५

एवंवह्नेर्मिथ्यात्वनिश्चयानंतरमपां मिथ्यात्वंचिंतयेदित्याह सतइति ९१ अश्वयिकारणधर्मान्स्वधर्मांश्च विभज्यदर्शयति संत्यापइति शब्देनसहवर्ततइतिसशब्दः सशब्दश्चासौस्पर्शश्च सशब्दस्पर्शस्तेन युक्ताइत्यर्थः ९२ विवेकध्यानाभ्यामपां मिथ्यात्वं निश्चित्यानंतरंभूतेमेर्मिथ्यात्वं निश्चितनीयंइत्याह सतइति ९३ तस्यांमिथ्यात्वचिंतनाय तद्धर्मानपिविभजते अस्तिभूरिति तेभ्यः सत्तामात्रंपृथक्कर्त्तव्यमित्याह सत्तेति ९४ सत्तापृथक्करणे फलमाह पृथगिति इदानींभौतिकेभ्योब्रह्माण्डादिभ्यः सतोविवेचनाय तदवस्थानप्रकारंदर्शयति भूमेरिति ९५ ॥

ब्रह्मांडमध्येतिष्ठंति भुवनानिचतुर्दश ॥
भुवनेषुचसंतेषु प्राणिदेहायथायथम् ९६
ब्रह्मांडलोकदेहेषु सद्वस्तुनिपृथक्कृते ॥
असंतोंडादयोभांतु तद्भानेपीहकाक्षितिः ९७
भूतभौतिकमायानामसत्वेऽत्यंतवासिते ॥
सद्वस्त्वद्वैतमित्येषा धीर्विपर्यैतिनक्कचित् ९८
सदद्वैतात्पृथग्भूते द्वैतेभूम्यादिरूपिणि ॥
तत्तदर्थक्रियालोके यथादृष्टातथैवसा ९९

सांख्यकाणादबौद्धाद्यैर्जगद्भेदोयथायथा ॥
उत्प्रेक्ष्यतेऽनेकयुक्त्या भवत्वेषतथातथा १००

तेषुसद्विवेचनेफलमाह ब्रह्मांडेति ९६ । ९७ तद्ध्यानेकाक्षतिरित्युक्तमेवार्थं स्पष्टीकरोति भूतेति भूतानामाकाशादीनां भौतिकानांब्रह्माण्डादीनां मायायाश्च तत्कारणभूतायामिथ्यात्वे विवेकध्यानाभ्यां चित्तेदृढंवासितेसति सद्वस्तुनोऽद्वैतत्वबुद्धिः कदाचिन्नविहन्यतइत्यर्थः ९८ ननुभूम्यादीनामसत्त्वेविद्युपोव्यवहारलोपःप्रसज्येतेत्याशंक्य विवेकेन मिथ्यात्वनिश्चयेपि भूम्यादेःस्वरूपोपमर्दनाभावान्न व्यापारोलुप्यतेइत्याह सदद्वैतदिति ९९ ननुससत्वस्याद्वैतरूपत्वेसांख्यादिभिरभिधीयमानस्य भेदस्यकुतोननिरासः क्रियतइत्याशंक्यव्यावहारिकभेदस्यास्माभिरभ्युपगतत्वान्न निरासायप्रयत्यतइतिश्राहसांख्येति १०० ॥

अवज्ञातंसदद्वैतं निःशंकैरन्यवादिभिः ॥
एवंकाक्षतिरस्माकं तद्द्वैतमवजानताम् १०१
द्वैतावज्ञासुस्थिताचेदद्वैतेधीःस्थिराभवेत् ॥
स्थैर्येतस्याःपुमानेषजीवन्मुक्तइतीर्यते १०२
एषाब्राह्मीस्थितिःपार्थ नैनांप्राप्यविमुह्यति ॥
स्थित्वास्यामंतकालेपि ब्रह्मनिर्वाणमृच्छति १०३
सदद्वैतेऽनृतद्वैते यदन्योन्यैक्यवीक्षणम् ॥
तस्यांतकालस्तद्भेदबुद्धिरेवनचेतरः १०४

ननुप्रमाणसिद्धस्य तत्वभेदस्यावज्ञानुपपन्नेत्याशंक्याह अवज्ञातमिति यथान्यवादिभिः सांख्यादिभिर्निःशंकैः श्रुत्यादिसिद्धस्यापिसदद्वैतस्यावज्ञा क्रियते श्रुतियुक्त्यानुभवावष्टंभेनास्माभिस्तदीयद्वैतानादरणे किंहीयतइत्यर्थः १०१ ननुनिःप्रयोजनेयंद्वैतावज्ञेत्याशंक्य जीवन्मुक्तिलक्षणप्रयोजनसद्भावान्मैवमित्याहद्वैतेति १०२ नकेवलंजीवन्मुक्तिरेव प्रयोजनमपितुविदेहमुक्तिरपीत्यभिप्रायेण कृष्णवाक्यमप्युदाहरति एषेति १०३ अंतकालशब्देन

वर्त्तमानदेहपातोभिधीयत इत्याशंकांवारयितुंविवक्षितमर्थमाह सदद्वैतेइति सद्रूपेऽद्वैतेऽनृतरूपेद्वैतेच यदन्योन्याध्यासलक्षणमैक्यज्ञानमस्तितस्यैक्यभ्रमस्यांतकालोनामतयोरद्वैतद्वैतयोः सत्यानृतरूपेणभेदबुद्धिरेवनापरो वर्त्तमानदेहपात इत्यर्थः १०४ ॥

यद्वांतकालःप्राणस्य वियोगोस्तुप्रसिद्धितः ॥
तस्मिन्कालेपिनभ्रांतेर्गतायाःपुनरागमः १०५
नीरोगउपविष्टोवा रुग्णोवाविलुठन्भुवि ॥
मूर्च्छितोवात्यजत्वेष प्राणान्भ्रांतिर्नसर्वथा १०६
दिनेदिनेस्वप्नसुप्त्योरधीतेविस्मृतेप्ययम् ॥
परेद्युर्नानधीतःस्यात्तद्वद्विद्यानश्यति १०७
प्रमाणोत्पादिताविद्या प्रमाणंप्रबलंविना ॥
ननश्यतिनवेदांतात्प्रबलंमानमीक्ष्यते १०८
तस्माद्वेदांतसंसिद्धंसदद्वैतंनबाध्यते ॥
अन्तकालेप्यतोभूतविवेकान्निर्वृतिःस्थिता १०९

इदानींलोकप्रसिद्धार्थस्वीकारेपिनदोपइत्यभिप्रायेणाह यद्वेति १०५ उक्तमेवार्थंप्रपंचयति नीरोगइति १०६ ननुप्राणवियोगकालेमूर्च्छादिनाज्ञाननाशेभ्रांतिःस्यादेवेत्याशंक्यज्ञाननाशाभावेदृष्टांतमाह दिनेइति यथाप्रत्यहमधीतेवेदेस्वप्नसुप्त्याद्यवस्थायांविस्मृतेपि परेद्युरनधीतवेदत्वंनास्ति तथामृतिकालेपितत्वानुसंधानाभावेपि ज्ञाननाशाभावइत्यर्थः १०७ ज्ञाननाशाभावमेवोपपादयतिप्रमाणइति १०८ उपपादितमर्थमुपसंहरतितस्मादिति १०९ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिकिंकरेणश्रीरामकृष्णाख्येनविदुषाविरचितामहाभूतविवेकस्यतात्पर्यदीपिकासमाप्ता ७ ॥

---




# अथ पञ्चदशी सटीक ॥

पञ्चकोशविवेक

गुहाहितंब्रह्मयत्तत्पंचकोशविवेकतः ॥
बोद्धुंशक्यंततःकोशपंचकंप्रविविच्यते १
देहादभ्यंतरःप्राणःप्राणादभ्यंतरंमनः ॥
ततःकर्ताततोभोक्ताग्रुहासेयंपरंपरा २

श्रीगणेशायनमः ॥ नत्वाश्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥ पंचकोश विवेकस्य कुर्वेव्याख्यांसमासतः १ तैत्तिरीयोपनिषत्तात्पर्यव्याख्यानरूपं पंच कोशविवेकाख्यं प्रकरणमारभमाणआचार्यस्तत्र श्रोतृप्रवृत्तिसिद्धये सप्रयो जनमभिधेयं सूचयन्मुखतश्चिकीर्षितं ग्रंथंप्रतिजानीते ॥ गुहाहितमिति ॥ यो वेदनिहितं गुहायांपरमेव्योमन्निितिश्रुत्यागुहाहितत्वेनाभिहितं यद्ब्रह्मास्ति गुहाशब्दवाच्यान्न मयादिकोशपंचकविवेकेन ज्ञातुंशक्यते यतस्तेषांकोशा नांपंचकंप्रकर्षेण प्रत्यगात्मनःसकाशाद्विभज्य प्रदर्श्यतइत्यर्थः ॥ ननुकेयंगु हायस्यांनिहितं ब्रह्मकोशपंचकविवेकेनाऽवबुध्यतइत्याशंक्य श्रुत्या गुहाश ब्देनविवक्षितमर्थमाह ॥ देहादिति ॥ देहादन्नमयात्प्राणः प्राणमयोभ्यंतरआं तरःप्राणात्प्राणमयात्मनः मनोमयः अभ्यंतरंततोमनोमयात्कर्ता विज्ञानम यआंतरं इत्यनुषज्यते ततोविज्ञानमयाद्भोक्ता आनंदमयःसोपि पूर्ववदांतरइ त्यर्थः॥सेयंअन्नमयाद्यानंदमयांतानां परंपरागुहाशब्देनोच्यतइत्यर्थः १।२॥

पितृभुक्तान्नजाद्वीर्याज्जातोऽन्नेनैववर्द्धते ॥
देहःसोन्नमयोनात्मा प्राक्चोर्ध्वंतदभावतः ३
पूर्वजन्मन्यसन्नेतज्जन्मसंपादयेत्कथम् ॥
भाविजन्मन्यसत्कर्म नभुंजीतेहसंचितम् ४
पूर्णोदेहेबलंयच्छन्नक्षाणांयःप्रवर्त्तकः ॥
वायुःप्राणमयोनासावात्माचैतन्यवर्ज्जनात् ५
अहंतांममतांदेहे गृहादौचकरोतियः ॥
कामाद्यवस्थयाभ्रांतो नासावात्मामनोमयः ६

इदानींअन्नमयस्यस्वरूपं तदनात्मत्वंचदर्शयति ॥ पितृभुक्तेति पितृभुक्ता न्नजान्मातृपितृभ्यां भुक्ताद्यवव्रीह्यादिलक्षणादन्नाज्जायमानंयद्वीर्यमस्तित स्माद्वीर्याद्योदेहीजातः यश्चजननानंतरंक्षीराद्यन्नेनैववर्द्धते सदेहोन्नमयोऽन्न स्यविकारः सआत्मानभवति ॥ कुतइत्यतआह प्रागिति ॥ जन्मनःप्राक्मर णादूर्ध्वंचतदभावतः तस्यदेहस्याभावादित्यर्थः ॥ विवादाध्यासितोदेहआ त्मानभवति कार्यत्वात्घटादिवदितिभावः ॥ हेतुरस्तुसाध्यंमाभूद्विपक्षेवाध काभावादप्रयोजकोयं हेतुरित्याशंक्य अकृताभ्यागमकृतविप्रणाशाख्यवाध कसद्भावान्मैवमितिपरिहरति ॥ पूर्वजन्मनीति एतद्देहरूपस्यात्मनः पूर्वस्मिन् जन्मन्यसत्वादेतज्जन्महेत्वदृष्टासंभवेप्यस्य जन्मनोप्यंगी क्रियमाणत्वादकृ ताभ्यागमः प्रसज्येततथाभाविजन्मन्यप्यस्य देहरूपस्यात्मनोऽसत्वादभावा दनुष्ठितयोः पुण्यपापयोः फलभोक्तुरभावेन भोगमंतरेणापिकर्मक्षयःप्रसज्येता यंकृतविप्रणाशः एवंकृतनाशाकृताभ्यागमरूपवाधकसद्भावादात्मनःकार्यत्वं नांगीकर्त्तव्यमितिभावः ३ । ४ ॥ एवमन्नमयकोशस्यानात्मत्वं प्रदर्श्यप्राण मयकोशस्वरूपं तदनात्मत्वंचदर्शयति ॥ पूर्णइति ॥ योवायुर्देहेपूर्णः पा दादिमस्तकपर्यंतंव्याप्तः सन्बलंयच्छन्यानरूपेण सामर्थ्यंप्रयच्छन्नक्षाणांच क्षुरादीनामिन्द्रियाणांप्रवर्तकः प्रेरकोवर्ततेसवायुः प्राणमयइत्युच्यतेऽसावप्या त्मानभवति । तत्रहेतुमाह ॥ चैतन्येति ॥ विवादाध्यासितःप्राणः आत्मा

नभवतिजडत्वाघटादिवदितिभावः । इदानींमनोमयस्वरूपप्रदर्शनपूर्वकंत स्याप्यनात्मत्वमाह ॥ अहंतामिति ॥ देहेऽहंतामहंभावंगृहादौममतांमदीय त्वाभिमानंचयः । करोत्यसौमनोमयआत्मानभवति । कुतइत्यतआह । कामादीति ॥ हेतुगर्भितविशेषणं ॥ कामक्रोधादिवृत्तिमत्वेनानियतस्वभावत्वादित्यर्थः । मनोमयआत्मानभवतिविकारित्वाद्देहवदितिभावः ५ । ६ ॥

लीनासुप्तौवपुर्बोधेव्याप्नुयादानखाग्रगा ॥
चिच्छायोपेतधीर्नात्मा विज्ञानमयशब्दभाक् ७
कर्तृत्वकरणत्वाभ्यां विक्रियेतांतरिंद्रियम् ॥
विज्ञानमनसीअंतर्वहिश्चैतेपरस्परम् ८
काचिदंतर्मुखावृत्तिरानन्दप्रतिबिंबभाक् ॥
पुण्यभोगेभोगशांतौ निद्रारूपेणलीयते ९

अनंतरंकर्तृशब्दवाच्यस्य विज्ञानमयस्यस्वरूपंप्रदर्शयस्तदनात्मत्वंदर्शयति ॥ लीनेति ॥ याचिच्छायोपेतधीश्चिदाभाससहितावुद्धिः सुप्तौसुप्तिकाले लीनाविलीनासतीबोधेजागरणकाले आनखाग्रगानखाग्रपर्यंतंवर्त्तमानासती वपुः शरीरंव्याप्नुयात् ॥ संव्याप्य वर्तते साविज्ञानमयशब्दभाग्विज्ञानमयशब्देनोच्यमानानात्माऽसावप्यात्मानभवति विलयाद्यवस्थावत्वाघटादिवदित्यर्थः ७ ॥ ननु मनोबुध्योरंतःकरणत्वाविशेषान्मनोमयविज्ञानमयरूपेण कोशद्वयकल्पनानुपपन्नेत्याशंक्य कर्तृत्वकरणत्वाभ्यां भेदसद्भावात् घटतएव मनोमयत्वादिभेदइत्याह ॥ कर्तृत्वेति ॥ अन्तरिन्द्रियमंतःकरणंकर्तृत्वकरणत्वाभ्यांकर्तृरूपेण करणरूपेणच विक्रियेतपरिणमतइत्यर्थः ॥ एतेविज्ञानमनसी विज्ञानमनःशब्दवाच्येभवतः । एतेचपरस्परमंतर्वहिर्भावेनवर्तेते अतःकोशद्वयत्वमुपपद्यत इत्यर्थः ॥ इदानींभोक्तृशब्दवाच्यस्यानंदमयस्यानात्मत्वं दर्शयितुंतस्यस्वरूपमाह ॥ काचिदिति ॥ पुण्यभोगेपुण्यकर्मफलानुभवकाले काचिद्धीवृत्तिरंतर्मुखासती आनंदप्रतिबिंबभाक् आत्मरूपस्यानंदस्यप्रतिबिंबंभजते सैवभोगशान्तौपुण्यकर्मफलभोगोपरमेसतिनिद्रारूपेणलीयते विलीनाभवतिसावृत्तिरानंदमयइत्यभिप्रायः ८ । ९ ॥

कादाचित्कत्वतोनात्मास्यादानन्दमयोप्ययम् ॥
बिंबभूतोयआनन्दआत्मासौसर्वदास्थितेः १०
ननुदेहमुपक्रम्यनिद्रानंदान्तवस्तुषु ॥
माभूदात्मत्वमन्यस्तुनकश्चिदनुभूयते ११
बाढंनिद्रादयःसर्वेऽनुभूयंतेनचेतरः ॥
तथाप्येतेनभूयंते येनतंकोनिवारयेत् १२

तस्यानात्मत्वमाह ॥ कादाचित्कत्वतइति ॥ अयमानन्दमयोपिकादाचित्कत्वादात्मानस्यादन्नादिपदार्थवदित्यर्थः । ननुविद्यमानानामानन्दमयादीनां सर्वेषामात्मत्वनिरासेनैरात्म्यंप्रसज्येतेत्याशंक्याह। बिं बेति ॥ बुद्ध्यादौप्रतिबिंबतयावस्थितस्यप्रियादिशब्दवाच्यस्यानंदमयस्यबिंबभूतः कारणभूतोयआनन्दोऽसावेवात्माभवतिकुतइत्यतआह॥सर्वदेति । नित्यत्वादित्यर्थः ॥ विवादाध्यासितआनन्दः आत्माभवितुमर्हतिनित्यत्वाद्यआत्मानभवतिनासौनित्योयथादेहादिः गगनादेरुत्पत्तिमत्वेनाऽनित्यत्वान्नानैकांतिकतेतिभावः १०चोदयति ॥ नन्विति ॥ अन्नमयाद्यानन्दमयांतानांकोशानामुक्तैर्हेतुभिरात्मत्वंनघटतेचेन्माघटिष्ठान्यस्त्वात्माऽनुपलभ्यमानत्वान्नैवसंभवति परिहरति ॥ बाढमिति ॥ अत्रनिद्राशब्देननिद्रानंदोलक्ष्यते ॥ निद्रादयोदेहांताउपलभ्यंतेऽन्योनानुभूयतइतियदुक्तंतत्सत्यं । कथंतर्हितदतिरिक्तस्यात्मनोंगीकारइत्यतआह । तथापीति ॥ अन्यस्यानुपलभ्यमानत्वेपि यद्बलादेतेषामानन्दमयादीनामुपलभ्यमानता भवति सोनुभवः कथंनांगीक्रियतइत्यर्थः ॥ ननूक्तेभ्योऽन्यआत्मायदिविद्येततर्ह्युपलभ्येत नोपलभ्यतेऽतोनास्तीत्याशंक्याह ॥ स्वयमिति ॥ आनन्दमयादीनांसाक्षिणोऽनुभवरूपत्वादेवानुभाव्यत्वंनास्तीति ११।१२॥

स्वयमेवानुभूतित्वाद्विद्यतेनानुभाव्यते ॥
ज्ञातृज्ञानांतराभावादज्ञेयोनत्वसत्तया १३
माधुर्यादिस्वभावानामन्यत्रस्वगुणार्पिणाम् ॥

स्वस्मिंस्तदर्पणापेक्षा नोनचास्त्यन्यदर्प्पकम् १४

अनुभवरूपत्वेप्यनुभाव्यत्वंकुतोनस्यादित्याशंक्याह । ज्ञात्रिति । ज्ञाताच ज्ञानंचज्ञातृज्ञाने अन्येज्ञातृज्ञानेज्ञातृज्ञानांतरे तयोरभावस्तस्मादज्ञेयः ज्ञान विषयोनभवतीति ॥ ज्ञात्राद्यभावाद्वान ज्ञायतेस्वस्यैवासत्वाद्वा किमत्रविनि गमकारणमित्यतआह ॥ नत्विति ॥ निद्रानंदादिसाक्षित्वेनासत्वस्यपूर्वमे वनिराकृतत्वादितिभावः ॥ अनुभवरूपस्यात्मनोनुभाव्यत्वाभावेदृष्टांतमा ह ॥ माधुर्यादीति ॥ आदिशब्देनाम्लादयोगृह्यंते ॥ माधुर्यादयःस्वभावाः सहजाधर्मविशेषा येषांतेमाधुर्यादिस्वभावागुडादयः तेषामन्यत्रस्वसंसृष्टप दार्थेषु चणकादिषु स्वगुणार्प्पिणां स्वगुणान्माधुर्यादीनर्पयंतीति स्वगुणा र्पिणस्तेषांस्वस्मिन्स्वस्वरूपे गुडादिलक्षणे तदर्पणापेक्षातेषां माधुर्यादीना मर्प्पणे संपादनेऽपेक्षाआकांक्षा माधुर्यादिकं केनचित्संपादनीयमित्येवं रू पानोनैवविद्यते ॥ किंचान्यदर्पकंनास्ति गुडादीनांमाधुर्यादिप्रदं वस्त्वंतरं नास्तीत्यर्थः १३ । १४ ॥

अर्पकांतरराहित्येप्यस्त्येषांतत्स्वभावता ॥
माभूत्तथानुभाव्यत्वं बोधात्मानुनहीयते १५
स्वयंज्योतिर्भवत्येष पुरोस्माद्भासतेखिलात् ॥
तमेवभांतमन्वेति तद्भासाभासतेजगत् १६

सदृष्टांतंफलितमाह॥अर्पकेति ॥ माधुर्यादिसमर्पकवस्त्वंतराभावेपिएषां गुडादीनां माधुर्यादिस्वभावता यथाविद्यते ॥ एवमात्मनोप्यनुभवविषय त्वंमाभूदनुभवरूपतातुभवत्येवेत्यर्थः ॥ उक्तार्थेप्रमाणमाह । स्वयमिति ॥ अत्रायंपुरुषःस्वयंज्योतिर्भवति अस्मात्सर्वस्मात्पुरतःसुविभातंतमेव भांतम नुभातिसर्वं तस्य भासासर्वमिदं विभातीत्यादि श्रुतय आत्मनःस्वप्रकाश त्वंबोधयंतीत्यर्थः १५ । १६ ॥

येनेदंजानतेसर्वं तत्केनान्येनजानताम् ॥
विज्ञातारंकेनविद्याच्छक्तंवेद्येतुसाधनम् १७

सवेत्तिवेद्यंतत्सर्वंनान्यस्तस्यास्तिवेदिता ॥
विदिताविदिताभ्यांतत्पृथग्बोधस्वरूपकम् १८

येनेदंसर्वंविजानाति तं केनविजानीयाद्विज्ञातारमरेकेनविजानीयादिति वाक्यमर्थतःपठति। येनेदमिति। येनसाक्षिचैतन्यरूपेणात्मनेदंसर्वं दृश्यजातं जानते प्राणिनस्तंसाक्षिणमात्मानमन्येन केनसाद्यभूतेनजडेनजानतामव गच्छेयुः पुमांसः ॥ अस्यैववाक्यस्यतात्पर्य्यमाह ॥ विज्ञातारमिति ॥ दृश्य जातस्यविज्ञातारंकेनदृश्यभूतेन विद्याज्जानीयान्नकेनापिजानातीत्यर्थः ॥ ननुमनसाज्ञास्यतीत्याशंक्याह। शक्तमिति ॥ साधनंतुज्ञानसाधनंमनोवेद्ये ज्ञातव्येविषयेशक्तं समर्थंनतुज्ञातर्यात्मनि ॥ नैववाचानमनसेत्यादिश्रुतेः ॥ स्वस्यापिज्ञेयत्वेकर्म्मकर्तृत्वविरोधाच्चेतिभावः ॥ आत्मनःस्वप्रकाशत्वएवसवे तिवेद्यंनचतस्यास्तिवेत्ता अन्यदेवतद्विदितादथो अविदितादधीतिवाक्यद्वय मपिप्रमाणमितिमन्वानस्तद्वाक्यमर्थतः पठति॥ सवेत्तीति ॥ सआत्माययद्वे द्यंतत्सर्वंवेत्तितस्यात्मनोविदिताज्ञाताऽन्योनास्तितद्बोधस्वरूपकं ब्रह्मविदिता विदिताभ्यां विदितंज्ञातंज्ञानेनविषयीकृतं अविदितमज्ञातमज्ञानेनावृतंताभ्यां पृथग्विलक्षणंबोधरूपत्वादेवेत्यर्थः १७। १८॥

बोधेप्यनुभवोयस्य नकथंचनजायते ॥
तंकथंबोधयेच्छास्त्रं लोष्टंनरसमाकृतिम् १९
जिह्वामेस्तिनवेत्युक्तिर्लज्जायैकेवलंयथा ॥
नबुध्यतेमयाबोधो बोद्धव्यइतितादृशी २०

ननुविदिताविदितातिरिक्तोबोधोनानुभूयतइत्याशंक्य विदितविशेषण स्यवेदनस्यैव बोधस्वरूपत्वात्तदनुभवाभावे विदितस्याप्यनुभवाभावप्रसंगा द्बोधानुभवोऽवश्यमंगीकर्तव्यइतिसोपहासमाह ॥ बोधेपीति ॥ यस्यमंदस्य बोधेपिघटादिस्फुरणरूपेप्यनुभवः साक्षात्कारः कथंचनकथमपिनजायतेनो त्पद्यते तंनरसमाकृतिंनरसमानाकारंलोष्टंलोष्टवज्जडंमनुष्यंशास्त्रंकथंबोधये त्कथमपिबोधयेदित्यर्थः ॥ बोधोनबुद्ध्यतइत्युक्तिरेवव्याहतेति सदृष्टान्त माह। जिह्वाम इति मेजिह्वास्ति वानवेत्युक्तिर्भाषणंयथालज्जायै केवलं ल

ज्जाजननायैवभवति नबुद्धिमत्वज्ञापनाय जिह्वयाविनाभाषणानुपपत्तेरेवंभ
यावोधोनवुद्ध्यते इतःपरंवोद्धव्यइत्युक्तिरपिताहृशी लज्जाहेतुरेववोधेनवि
नातद्व्यवहारासिद्धेरित्यर्थः १६ । २० ॥

यस्मिन्यस्मिन्नस्तिलोकेवोधस्तत्तदुपेक्षणे ॥
यद्बोधमात्रंतद्ब्रह्मेत्येवंधीर्ब्रह्मनिश्चयः २१
पंचकोशपरित्यागेसाक्षिवोधावशेषतः ॥
स्वस्वरूपंसएवस्यात्शून्यत्वंतस्यदुर्घटम् २२

भवत्वेवंसवोधस्तथापि प्रकृतेब्रह्मावबोधेकिमायातमित्याशंक्याह ॥ य
स्मिन्निति ॥ लोकेजगति यस्मिन्यस्मिन्घटादिलक्षणे विषयेवोधोज्ञानमस्ति
तत्तदुपेक्षणे तस्यतस्यघटादिविषयस्योपेक्षणेऽनादरणेकृते सति यद्बोधमा
घटादिषुसर्वत्रानुस्यूतं यत्स्फुरणमस्तितदेवब्रह्मेत्येवं रूपाधीर्बुद्धिर्ब्रह्मनिश्चयं
ब्रह्मावगतिरित्यर्थः ॥ ननुघटादिविषयोपेक्षयातदर्थानुभवरूपं ब्रह्मावगम्यं
चेत्कोशपंचकविवेकोनिःप्रयोजनः स्यादित्याशंक्य ब्रह्मणः प्रत्यक्रूपता
नेनविनासंसारानिवृत्तेस्तथात्वाववोधोपयोगित्वान्नतस्यापि वैयर्थ्यमित्याह
पंचकोशेति ॥ पंचानांकोशानामन्नमयादीनां परित्यागेवुद्ध्यानात्मत्वनि
येकृते तत्साक्षिरूपस्यवोधस्यावशेषणात्ससाक्षिरूपो वोधएवस्वस्वरूपं स्वी
जंस्वरूपंब्रह्मैवस्यात् ॥ नन्वन्नमयादीनामनुभवसिद्धानां त्यागेशून्यपरिशे
स्यात् इत्याशंक्याहशून्यत्वमिति ॥ तस्यसाक्षिवोधस्यशून्यत्वं दुर्घटंदुःसंपा
मित्यर्थः २१ । २२ ॥

अस्तितावत्स्वयंनामविवादाविषयत्वतः ॥
स्वस्मिन्नपिविवादश्चेत्प्रतिवाद्यत्रकोभवेत् २३
स्वासत्वंतुनकस्मैचिद्रोचतेविभ्रमंविना ॥
अतएवश्रुतिर्बाधं ब्रूतेचासत्ववादिनः ॥ २४
असद्ब्रह्मेतिचेद्वेदस्वयमेवभवेदसन् ॥
अतोस्यमाभूद्वेद्यत्वं स्वसत्वंत्वभ्युपेयताम् २५

कीदृक्तर्हीतिचेत्पृच्छेरीदृक्तानास्तितत्रहि ॥
यदनीदृगताहक्त्वतत्स्वरूपंविनिश्चिनु २६

दुर्घटत्वमेवोपपादयति ॥ अस्तीति॥ स्वयंशव्दवाच्यंस्वस्वरूपं लौकिका नांवैदिकानांच मतेतावदस्त्येव ॥ कुतइत्यतआह ॥ विवादेति ॥ स्वस्वरूप स्यविप्रतिपत्तिविषयत्वाभावादित्यर्थः ॥ विपक्षेवाधकमाह॥ स्वस्मिन्नपीति ॥ स्वात्मन्यपिविप्रतिपत्तौसत्यां अत्रास्यांविप्रतिपत्तौ कःप्रतिवादीस्यान्नकोपी त्यर्थः। ननुस्वासत्ववाद्येव प्रतिवादीभविष्यतीत्याशंक्य तथाविधः कोपिना स्तीत्याह ॥ स्वासत्वमिति ॥ भ्रांतिमेकांविहायान्यस्यांदशायां स्वस्याभावः केनापिनांगीक्रियत इत्यर्थः ॥ कुतएवंनिश्चीयतइत्याशंक्याह ॥ अतइति ॥ यतः कस्मैचिन्नरोचतेऽतएवश्रुतिरप्यसत्ववादिनोवाधं ब्रूते ॥ केयंश्रुतिरित्या कांक्षायामसन्नेवेत्यादिकांतांश्रुतिमर्थतःपठति ॥ असदिति ॥ यदिब्रह्मासदि तिजानीयात्तर्हिस्वयमेवब्रह्मणोऽसत्वज्ञान्यसन्भवेत्स्वस्यैव ब्रह्मरूपत्वादित्य र्थः ॥ फलितमाह॥ अतोस्येतिइदानीमात्मनः स्वप्रकाशत्वंवक्तुकामस्तस्यवे द्यत्वाभावेकीदृक्स्वरूपमितिप्रश्नमुत्थापयति ॥ कीदृगिति ॥ अयमभिप्रा यः ॥ आत्मनईदृक्तादिकेनचिद्रूपेण वैशिष्ट्यांगीकारेतेनैवरूपेण वेद्य त्वंस्यात्तदनंगीकारे शून्यत्वमिति ॥ सत्यमीदृक्त्वाद्यंगीकारे तथैववेद्यत्वं तत्तुनांगीक्रियतइत्याह ॥ ईदृक्तेति ॥ उपलक्षणमेतत्ताहक्त्वस्यापि ॥ उभयाभावमेवाह ॥ यदनीदृगिति ॥ नहिप्रतिज्ञामात्रेनार्थसिद्धिरित्याशं क्य २३। २४। २५। २६ ॥

अक्षाणांविषयस्त्वीदृक् परोक्षस्तादृगुच्यते ॥
विषयीनाक्षविषयः स्वत्वान्नास्यपरोक्षता २७
अवेद्योप्यपरोक्षोतः स्वप्रकाशोभवत्ययम् ॥
सत्यंज्ञानमनंतंचेत्यस्तीहब्रह्मलक्षणम् २८
सत्यत्वंवाधराहित्यंजगद्बाधैकसाक्षिणः ॥
वाधःकिंसाक्षिकोब्रूहिनत्वसाक्षिकइष्यते २९

ईदृक्ताहक्शव्दयोरर्थमभिदधानस्तदवाच्यत्वमुपपादयति ॥ अक्षाणा

मिति ॥ प्रत्यक्षस्यैवघटादेरीदृक्शब्दवाच्यत्वंदृष्टंपरोक्षस्यैव धर्मादेस्तादृक्श ब्दवाच्यत्वं ॥ द्रष्टुरात्मनस्तुइन्द्रियजन्यज्ञानविषयत्वाभावान्नेदृक्त्वंस्वत्वेनैव परोक्षत्वाभावान्नतादृक्त्वमित्यर्थः ॥ तर्हिशून्यमिति द्वितीयंपक्षंफलप्रदर्शन व्याजेनपरिहरति ॥ अवेद्यइति ॥ इन्द्रियजन्यज्ञानविषयत्वाभावेप्यपरोक्षत्वा त्स्वप्रकाश इत्यर्थः ॥ अत्रायंप्रयोगः ॥ आत्मास्वप्रकाशः संवित्कर्मतामंतरे णापरोक्षत्वात्संवेदनवदिति ॥ नच विशेषणासिद्धोहेतुः आत्मनः संवि त्कर्मत्वेकर्मकर्तृभावविरोधप्रसंगात् ॥ स्वस्वरूपेणकर्तृत्वं विशिष्टरूपेणकर्म त्वमित्यविरोधइति चेन्नगमनक्रियायामप्येकस्यैवस्वरूपेण कर्तृत्वंविशिष्टरू पेणकर्मत्वमित्यतिप्रसंगात् ॥ नचसाधनविकलोदृष्टांतः संवेदनस्यसंवेदनां तरापेक्षायामनवस्थानादिति ॥ नन्वात्मनःस्वप्रकाशत्वेन सिद्धत्वेपिब्रह्म लक्षणाभावान्न ब्रह्मत्वसिद्धिरित्याशंक्यतल्लक्षणं तत्रयोजयति। सत्यमिति ॥ सत्यंज्ञानमनंतंब्रह्मेति श्रुत्यायद्ब्रह्मलक्षणमुक्तं तदिहात्मनिविद्यतइत्यर्थः ॥ आत्मनःसत्यत्वोपपादनायतावत्सत्यत्वस्यलक्षणमाहसत्यत्वमिति। बाधशू न्यत्वंसत्यत्वं ससमबाध्यंबाध्यं मिथ्येतितद्विवेकइति पूर्वाचार्यैरुक्तत्वात्॥ अस्तु प्रकृतेकिमायातमित्यतआह। जगदिति ॥ जगतःस्थूलसूक्ष्मशरीरादिलक्षण स्ययोबाधःसुप्तिमूर्च्छासमाधिष्वविद्यमानता तत्तत्साक्षित्वेनैववर्तमानस्यात्म नो बाधःकिंसाक्षिकःकःसाक्षी अस्यबाधस्यासौ किंसाक्षिकः नकोपिसाक्षी विद्यतइत्यर्थः ॥ असाक्षिकोप्यात्मबाधः किंनस्यादित्याशंक्याह॥ नत्विति॥ साक्षिरहितोबाधो नाभ्युपगंतव्योऽन्यथाऽतिप्रसंगादितिभावः २७।२८।२९॥

अपनीतेषुमूर्तेषुह्यमूर्तंशिष्यतेवियत् ॥
शक्येषुबाधितेष्वंतेशिष्यतेयत्तदेवतत् ३०
सर्वबाधेनकिंचिच्चेद्यन्नकिंचित्तदेवतत् ॥
भाषाएवात्रभिद्यंतेनिर्बाधंतावदस्तिहि ३१

उक्तमर्थंदृष्टांतेनस्पष्टयति॥ अपनीतेष्विति॥ मूर्त्तेषुगृहादिमत्सु घटादि ष्वपनीतेषु गृहादिभ्योनिःसारितेषुसत्सु यथापनेतुमशक्यं नभएवावशिष्य तेएवंस्वव्यतिरिक्तेषु मूर्तामूर्तेषुदेहेंद्रियादिषु निराकर्तुंशक्येषुनेतिनेतीतिश्रु

त्यानिराकृतेषुसत्सु अंतेअवसाने सर्वनिराकरणसाक्षित्वेन योवोधोवशिष्य तेसएववाधरहितआत्मेत्यर्थः ३० ननुप्रतीयमानस्यसर्वस्यापिनिषेधे किंचि न्नावशिष्यतेऽतः कथंशिष्यतेयतदेवतदित्यवशिष्टस्यात्मत्वमुच्यतइतिशंक ते ॥ सर्वबाधइति ॥ नकिंचिदवशिष्यतइतिवदतापितथाप्रयोगसिद्धयेसर्वा भावविषयं ज्ञानमवश्यमभ्युपेतव्यमतस्तदेवास्मदभिमतात्मस्वरूपमित्यभि प्रायेणपरिहरति यत्रेतिनकिंचिदितिशब्देनयच्चैतन्यमुच्यतेतदेवतद्ब्रह्मेत्यर्थः नकिंचिदित्यभाववाचकेननकिंचिच्छब्देनकथंचैतन्यमुच्यतइत्याशंक्यवाध साक्षिणोऽवश्यमभ्युपेयत्वादभिधायकशब्देष्वेवविप्रतिपत्तिर्नाभिधेयइतिप रिहरति॥ भाषाइति ॥ अत्रवाधसाक्षिणिप्रत्यगात्मनिभाषाएवन किंचित्साक्षी त्यादिशब्दाएवभिद्यंते निर्बाधंबाधरहितंसाक्षिचैतन्यंतु विद्यतएवेत्यर्थः ३१॥

अतएवश्रुतिर्बाध्यंबाधित्वाशेषयत्यदः ॥
सएषनेतिनेत्यात्मेत्यतद्व्यावृत्तिरूपतः ३२
इदंरूपंतुयद्यावत्तत्त्यक्तुंशक्यतेखिलम् ॥
अशक्योह्यनिदंरूपःसआत्मावाधवर्जितः ३३

उक्तमर्थंश्रुत्यारूढंकरोति ॥ अतएवेति ॥ यतःसाक्षिचैतन्यमवाध्यमतएवस एषनेतिनेत्यात्मेति श्रुतिरतद्व्यावृत्तिरूपतोऽनात्मपदार्थनिराकरणद्वारेणवा ध्यंनिराकरणयोग्यंसर्वमनात्मवस्तुजातं वाधित्वानिराकृत्यअदोनिराकर्तुम शक्यं प्रत्यक्स्वरूपंशेषयतिअवशेषयति ॥ नेतिनेतीतिश्रुतिर्बाधयोग्यंवा धित्वावाधितुमशक्यमवशेषयतीत्युक्तं तत्रकीदृशंवाधितुंशक्यंकीदृशमश क्यमितिविवक्षायांतदुभयंविभज्यदर्शयति । इदंरूपमितिइदमित्येवंरूपंदृश्य त्वेनानुभूयमानंरूपंस्वरूपंयस्यदेहादेस्तदिदंरूपंतुशब्दोवधारणे ॥ यद्यावदि तिपदद्वयंसर्वदृश्योपसंग्रहार्थं ॥एवंचसतियद्दृश्यंतदखिलस्यत्यक्तुंशक्यते एवेत्यर्थःसंपद्यते॥ अनिदंरूपःप्रत्यक्त्वेनेदंतयावगंतुमयोग्यः साक्षीअशक्य स्त्यक्तुमित्यर्थः । हीतिनिपातेनप्रसिद्धिद्योतकेन त्यक्तुःस्वरूपत्वेन त्यागा योग्यतांसूचयति ॥ फलितमाह ॥ आत्मेति ॥ योवाधरहितः साक्षीसएवा त्मानाहंकारादिदृश्यइत्यर्थः ३२ । ३३ ॥

सिद्धंब्रह्मणिसत्यत्वंज्ञानत्वंतुपुरेरितम् ॥
स्वयमेवानुभूतित्वादित्यादिवचनैःस्फुटम् ३४
नव्यापित्वाद्देशतोंतोनित्यत्वान्नापिकालतः ॥
नवस्तुतोपिसार्वात्म्यादानंत्यंब्रह्मणित्रिधा ३५

भवत्वात्मनोऽवाध्यत्वंप्रकृतेःकिमायातमित्यतआह॥ सिद्धमिति ॥ब्रह्मणि ब्रह्मलक्षणे यत्सत्यत्वमभिहितंतदात्मनिसिद्धंभवतु सत्यत्वंज्ञानत्वं कथमित्या कांक्षायां तत्पूर्वमेवोपपादितमित्याह। ज्ञानत्वमिति॥स्वयमेवानुभूतित्वादि ग्यतेनानुभाव्यतइत्यादिभिर्वचनैर्ज्ञानरूपत्वं पूर्वमेवाभिहितमित्यर्थः। ननुसत्य त्वज्ञानत्वयोरात्मनिसिद्धत्वेऽथानंत्यंनघटते ब्रह्मण्यपितस्यासिद्धेरित्याशंक्य ब्रह्मणितावत्तत्साधयति ॥नव्यापित्वादिति । नित्यंविभुंसर्वगतंसुसूक्ष्मं आ काशवत्सर्वगतश्चनित्यः नित्यो नित्यानांचेतनश्चेतनानांइदंसर्वंयदयमात्मा सर्वंह्येतद्ब्रह्मब्रह्मैवेदंसर्वमित्यादि श्रुतिषु व्यापित्वनित्यत्वसर्वात्मत्वप्रतिपा दनाद्ब्रह्मणस्त्रिविधमप्यानंत्यं देशकालवस्तुकृतपरिच्छेदराहित्यमभ्युपेतव्य मित्यर्थः ३४ । ३५ ॥

देशकालान्यवस्तूनांकल्पितत्वाच्चमायया ॥
नदेशादिकृतोंतोस्तिब्रह्मानंत्यंस्फुटंततः ३६

नकेवलंश्रुतिःतंकिंतुयुक्तितोपीत्याह ॥ देशकालेति ॥ परिच्छेदहेतूनां दे शकालान्यवस्तूनां माययाकल्पितत्वाच्चगंधर्वनगरादिभिर्गगनस्येव नदेशा दिभिःकृतःपारमार्थिकःपरिच्छेदो ब्रह्मणिसंभवतियतोऽतो ब्रह्मण्यानंत्यंता द्व्यक्तमेव । तदेतत्सत्यमात्मा ब्रह्मैवब्रह्मात्मैवात्रह्येवंन विचिकित्स्यमित्यों त्यमात्मैवनृसिंहोदेवो ब्रह्मभवतिअयमात्मा ब्रह्मेत्यादिभिरात्मनोब्रह्माभेद तिपादनात्तस्याप्यानंत्यं सिद्धमितितात्पर्यं ३६ ॥

सत्यंज्ञानमनंतंयद्ब्रह्मतद्वस्तुतस्यतत् ॥
ईश्वरत्वंचजीवत्वमुपाधिद्वयकल्पितम् ३७

शक्तिरस्त्यैश्वरीकाचित्सर्ववस्तुनियामिका ॥
आनन्दमयमारभ्य गूढाःसर्वेषुवस्तुषु ३८
वस्तुधर्मानियम्येरञ्छक्त्यानैवयदातदा ॥
अन्योन्यधर्मसांकर्य्याद्विप्लवेतजगत्खलु ३९

ननुजडस्यजगतोब्रह्मण्यारोपितत्वेन ब्रह्मणःपरिच्छेदकत्वाभावेपिचेतनयोर्जीवेश्वरयोस्तदसंभवात्तत्कृतपरिच्छेदवत्वेनानंत्यं ब्रह्मणोनसंगच्छतइत्याशंक्य तयोरप्यौपाधिकरूपत्वेन पारमार्थिकत्वाभावान्नतयोरपि वास्तवपरिच्छेदहेतुत्वमित्यभिप्रायेणाह ॥ सत्यमिति ॥ यत्सत्यादिरूपं ब्रह्मतद्वस्तुतदेव पारमार्थिकंतस्य ब्रह्मणोयल्लोकप्रसिद्धमीश्वरत्वं जीवत्वंच तद्वक्ष्यमाणोपाधिद्वयेनकल्पितं अतः कल्पितत्वादेवजडवज्जीवेश्वरयोरपि तत्परिच्छेदकत्वाभावइतिभावः ३७ किंतदुपाधिद्वयमित्याकांक्षायां तदुभयंक्रमेण दिदर्शयिषुरादावीश्वरोपाधिभूतां शक्तिंनिरूपयति ॥ शक्तिरिति ॥ ऐश्वरीईश्वरत्वोपाधितयाईश्वरसंबंधिनी काचित्सदसत्वादिभीरूपैर्निर्वक्तुमशक्यासर्ववस्तुनियामिकासर्वेषामंतर्यामिब्राह्मणोक्तानांपृथिव्यादीनांवस्तूनांनियमनकर्त्री शक्तिरस्ति ॥ साकुत्रतिष्ठति कुतोवानोपलभ्यतइत्याशंक्याह॥ आनन्देति ॥ आनन्दमयादिषु ब्रह्मांडांतेषु सर्वेषुवस्तुषु गूढावर्त्ततेऽतोनोपलभ्यतइत्यर्थः ॥ नियमेनानुपलभ्यमानायास्तस्या असत्वमेवंकिंनस्यादित्याशंक्य जगन्नियमनान्यथाऽनुपपत्त्या सावश्यमभ्युपेयेत्याह ॥ वस्तुधर्माइति ॥ वस्तूनांपृथिव्यादीनां काठिन्यद्रवत्वादयोयदाशक्त्या नव्यवस्थाप्यंते तदातेषां धर्माणांसांकर्याद्विमिश्रणेनैकैकत्रावस्थानाज्जगद्विप्लवेत अनियतव्यवहारविषयतांप्राप्नुयादित्यर्थः । खल्वितिप्रसिद्धिंद्योतयति ३८ । ३९ ॥

चिच्छायावेशतःशक्तिश्चेतनेवविभातिसा ॥
तच्छक्त्युपाधिसंयोगाद्ब्रह्मैवेश्वरतांव्रजेत् ४०
कोशोपाधिविवक्षायां यातिब्रह्मैवजीवताम् ॥
पितापितामहश्चैकः पुत्रपौत्रौयथाप्रति ४१

पुत्रादेरविवक्षायां नपितानपितामहः ॥
तद्वन्नेशोनापिजीवः शक्तिकोशाविवक्षणे ४२

ननुजडायाअस्याजगन्नियामकत्वं नयुज्यतेइत्याशंक्याह ॥ चिच्छायेति ॥ साशक्तिश्चिच्छायावेशतः चिदाभासप्रवेशाच्चेतनेवचेतनत्वमापन्नेव विभातिप्रतीयतेऽतोस्याः नियामकत्वंघटतइतिभावः अस्तुप्रकृतेकिमायातमित्यतआह ॥ तच्छक्तीति ॥ साचासौशक्तिश्चेतिकर्मधारयः सैवोपाधिस्तेन संयोगः संबंधस्तस्माद्ब्रह्मैवसत्यादिलक्षणमीश्वरतां सर्वज्ञत्वादिधर्मयोगितांव्रजेत्प्राप्नुयात् ४० जीवत्वोपाधिभूतानां कोशानांप्रागेवाभिहितत्वात्तन्निमित्तकंजीवत्वमिदानीमाह ॥ कोशोपाधीति ॥ कोशाएवोपाधिः कोशोपाधिःतद्विवक्षायां पर्यालोचनायां क्रियमाणायां ब्रह्मैवसत्यादिलक्षणमेवजीवतां जीवव्यवहारविषयतांगच्छति नन्वेकस्यैवंविरुद्धधर्मद्वययोगित्वं युगपत्क्वापिदृष्टचरमित्याशंक्याह॥ पित्तेति ॥ यथैकएवदेवदत्तएकदैवपुत्रंप्रतिपिताभवति पौत्रंप्रतितुपितामहएवं ब्रह्मापिकोशोपाधिविवक्षायां जीवोभवति शक्त्युपाधिविवक्षायामीश्वरश्चभवतीत्यर्थः । वस्तुतस्तुजीवत्वमीश्वरत्वं वा ब्रह्मणोनास्तीत्येतत्सदृष्टांतमाह ॥ पुत्रादेरिति ४१ । ४२ ॥

यएवंब्रह्मवेदैषब्रह्मैवभवतिस्वयम् ॥
ब्रह्मणोनास्तिजन्मातःपुनरेषनजायते ४३

इतिपञ्चकोशविवेकःसमाप्तः ॥

इदानीमुक्तज्ञानस्यफलमाह ॥ यएवमिति ॥ यःसाधनचतुष्टयसंपन्नएव मुक्तेनप्रकारेणपञ्चकोशविवेकपुरःसरं ब्रह्मप्रत्यगभिन्नंसत्यादिलक्षणं वेदसाक्षात्करोतिएषस्वयंब्रह्मैवभवति । सयोहवैतत्परमंब्रह्मवेदब्रह्मैवभवतिब्रह्मविदाप्नोतिपरमित्यादिश्रुतिभ्यः ततोपिकिमित्यतआह ॥ ब्रह्मणइति ॥ नजायतेम्रियतेवाविपश्चिदित्यादि श्रुतेर्ब्रह्मणस्तावज्जन्मनास्तिअतएवविद्वानपिस्वात्मनंस्तद्रूपत्वावगमान्नैवजायतेनचपुनरावर्त्ततइतिश्रुतेरिति ४३ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्यविदुषाविरचितापञ्चकोशविवेकव्याख्यासमाप्ता ३ ॥



# अथ पञ्चदशी सटीक ॥

द्वैतविवेकप्रारम्भः ॥

ईश्वरेणापिजीवेनसृष्टंद्वैतंविविच्यते ॥
विवेकेसतिजीवेनहेयोबंधःस्फुटीभवेत् १
मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरम् ॥
समायीसृजतीत्याहुःश्वेताश्वतरशाखिनः २

नत्वाश्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥ मयाद्वैतविवेकस्य क्रियतेपद योजना १ चिकीर्षितस्यग्रन्थस्यनिष्प्रत्यूहपरिपूरणायाभिलषितदेवतातत्वा नुस्मरणलक्षणं मंगलमाचरन्नस्यवेदांतप्रकरणत्वाच्छास्त्रीयमेवानुबंधचतुष्ट यं सिद्धवत्कृत्यग्रन्थारंभंप्रतिजानीते ॥ ईश्वरेणेति ॥ ईश्वरेणकारणोपाधिके नांतर्यामिणाजीवेनापिकार्योपाधिकेनाहं प्रत्ययिनाचसृष्टमुत्पादितंद्वैतंजग द्विविच्यतेविभज्यप्रदर्श्यते॥ अस्यद्वैतविवेचतस्यकाकदंतपरीक्षावन्निःप्रयोज नत्वंवारयति ॥विवेकइति॥ विवेकेजीवेश्वरसृष्टयोर्द्वैतयोर्विवेचनेकृतेसतिजी वेनपूर्वोक्तेनहेयःपरित्याज्यःबंधोबंधहेतुर्द्वैतंस्फुटीभवेत् स्पष्टतांगच्छेद्देतावज्जी वेनहेयमितिनिश्चीयतइत्यर्थः ॥ नन्वदृष्टद्वाराजीवानामेवजगद्धेतुत्वंवादि नोवर्णयंति अतःकथमीश्वरस्रष्टृत्वमुच्यते जगतइत्याशंक्यबहुश्रुतिविरोधा न्नेदंचोद्यमुत्थापयितुमर्हतीत्यभिप्रेत्यश्वेताश्वतरवाक्यंतावदर्थतः पठति ॥ मायांत्विति ॥ मायोपाधिकमीश्वरं प्रस्तुत्यास्मान्मायीसृजतेविश्वमेतदि तितस्यैवेश्वरस्यजगत्स्रष्टृत्वंश्वेताश्वतरशाखिनोवर्णयंतीत्यर्थः १ । २ ॥

आत्मावाइदमग्रेभूत्सईक्षतसृजाइति ॥
संकल्पेनासृजल्लोकान्सएतानितिवह्वृचाः ३
खंवाय्वग्निजलोर्व्योपद्ध्यन्नदेहाःक्रमादमी ॥
संभूताब्रह्मणस्तस्मादेतस्मादात्मनोखिलाः ४
बहुस्यामहमेवातःप्रजायेयेतिकामतः ॥
तपस्तप्त्वासृजत्सर्वंजगदित्याहतित्तिरिः ५

ऐतरेयोपनिषद्वाक्यमर्थतोनुक्रामति॥ आत्मावाइति॥ आत्मावाइदमेक एवाग्रआसीन्नान्यत्किंचनमिषत्सईक्षतलोकान्नुसृजाइति सइमांल्लोकानसृजतेत्यनेनवाक्येनाद्वितीयस्य परमात्मनएव जगत्स्रष्टृत्वंवह्वृचऋक्शाखाध्यायिनः। आहुरित्यर्थः ॥ ईश्वरस्यजगत्कारणत्वेतैत्तिरीय श्रुतिरपिप्रमाणमित्यभिप्रेत्यतद्वाक्यमर्थतःपठति खेति॥ सत्यंज्ञानमनंतब्रह्मेत्युपक्रम्य तस्माद्वाएतस्मादात्मन आकाशःसंभूतइत्यादिनाऽन्नात्पुरुषइत्यंतेन वाक्येन हाहितत्वेनप्रत्यगभिन्नाद्ब्रह्मण आकाशादिदेहपर्यंतं जगदुत्पन्नमित्यभिधायोपरिष्ठादपिसोकामयत बहुस्यांप्रजायेयेतिसतपोतप्यतसतपस्तप्त्वा इदं सर्वमसृजतयदिदंकिंचेतिवाक्येन तस्यैवब्रह्मणोजगत्सर्ज्जनेच्छापूर्वकपर्यालोचनेनजगत्स्रष्टृत्वंतित्तिरिराहेत्यर्थः ३।४।५॥

इदमग्रेसदेवासीद्बहुत्वायतदैक्षत ॥
तेजोऽवन्नांडजादीनिससर्ज्जेतिचसामगाः ६
विस्फुलिंगायथावह्नेर्जायंतेऽक्षरतस्तथा ॥
विविधाश्चिज्जडाभावाइत्याथर्वणिकीश्रुतिः ७

छांदोग्येपिब्रह्मणएवजगत्स्रष्टृत्वंश्रुतमित्याह॥ इदमग्रइति॥ सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयमिति सद्रूपमद्वितीयंब्रह्मोपक्रम्यतदैक्षत बहुस्यांप्रजायेयेतिततेजोसृजंतेत्यादिनातस्यैवेक्षणपूर्वकं तेजोऽवन्नस्रष्टृत्वमभिधाय तेषांखल्वेषांभूतानांत्रीण्येव वीजानि भवंत्यांडजंजीवजमुद्भिज्जमित्यादिनांडजादिशरीरनिर्मातृत्वंच सामगावर्णयंतीत्यर्थः॥ मुंडकोपनिषद्यपितदेत

त्यं यथा सुदीप्तात्पावकाद्विस्फुलिंगाः सहस्रशः प्रभवंते सरूपाः ॥ तथाऽक्षराद्वि विधाः सोम्य भावाः प्रजायंते तत्र चैवापियंतीत्यक्षरशब्दवाच्याद्ब्रह्मणो जगदु त्पत्तिः श्रूयत इत्याह ॥ विस्फुलिंगा इति ६ । ७ ॥

जगदव्याकृतं पूर्वमासीद्व्याक्रियतेधुना ॥
दृश्याभ्यां नामरूपाभ्यां विराडादिषु ते स्फुटे ८
विराण्मनुर्नरा गावः खराश्वाजावयस्तथा ॥
पिपीलिकावधि द्वंद्वमिति वाजसनेयिनः ९

एवं बृहदारण्यकेऽप्यव्याकृतशब्दवाच्याद्ब्रह्मणो नामरूपात्मकं जगदुत्प न्नमिति श्रुतमित्याह । जगदिति ॥ तद्धेदं तर्ह्यव्याकृतमासीत्तन्नाम रूपाभ्यामे वव्याक्रियते सौ नामायमिदं रूप इति वाक्येन सृष्टेः पुराऽस्पष्टनामरूपत्वेनाव्या कृतशब्दवाच्यान्मायोपाधिकाद्ब्रह्मणो नामरूपस्पष्टीकरण लक्षणसृष्टिरुक्ता तयोर्नामरूपयोर्विराडादिषु स्थूलकार्येषु स्पष्टता च तदिदमप्येतर्हि नामरूपा भ्यामेव व्याक्रियते सौ नामायमिदं रूपमिति वाक्येनाभिहिता ते च विराडादय आत्मैवेदमग्र आसीत्पुरुषविध इत्यादिना एवमेव यदिदं किंच मिथुनमापिपीलि काभ्यस्तत्सर्वमसृजते त्यंते वदर्शिता इत्यर्थः ८ । ९ ॥

कृत्वा रूपांतरं जैवं देहे प्राविशदीश्वरः ॥
इति ताः श्रुतयः प्राहुर्जीवत्वं प्राणधारणात् १०
चैतन्यं यदधिष्ठानं लिंगदेहश्च यः पुनः ॥
चिच्छाया लिंगदेहस्था तत्संघो जीव उच्यते ११

उदाहृताभिः श्रुतिभिर्द्वैतसृष्ट्यभिधानानंतरं ब्रह्मणो जीवरूपेण तत्र प्रवे शोप्यभिहित इत्याह । कृत्वेति ॥ श्रुतयः जैवं जीवसंबंधि रूपांतरमविक्रिय ब्रह्म णो विलक्षणं विकाररूपमित्यर्थः ॥ देहे देहजाते ॥ जीवत्वं कुत इत्यत आह ॥ जीवत्वमिति ॥ प्राणादीनां स्वामित्वेन प्रेरकत्वं प्राणधारणं तस्माज्जैवं रूपं कृत्वा प्राविशदित्युक्तं किं तदित्यपेक्षायामाह ॥ चैतन्यमिति ॥ अधिष्ठानं लिंगदेहकल्पनाधारभूतं यच्चैतन्यमस्ति यश्च तत्र कल्पितो लिंगदेहो यश्च त

स्मिन्लिंगदेहेविद्यमानश्चिदाभासः तत्संघस्तेषांत्रयाणांसमूहो जीवशब्देनो च्यतइत्यर्थः १० । ११ ॥

माहेश्वरीतुमायायातस्यानिर्माणशक्तिवत् ॥
विद्यतेमोहशक्तिश्चतंजीवंमोहयत्यसौ १२
मोहादनीशतांप्राप्यमग्नोवपुषिशोचति ॥
ईशसृष्टमिदंद्वैतंसर्वमुक्तंसमासतः १३

नन्वीश्वरस्यैवजीवरूपेण प्रविष्टत्वेतस्याज्ञत्वदुःखित्वादिविरुद्धधर्मवत्त्वं तइत्याशंक्याह ॥ माहेश्वरीति ॥ माहेश्वरीमायिनंतुमहेश्वरमितिश्रुत्युक्त महेश्वरसंबंधिनीयामायास्तितस्यानिर्माण शक्तिवज्जगत्सर्ज्जनसामर्थ्य वत् मोहशक्तिश्चमोहनसामर्थ्यमप्यस्तितदेतज्जडं मोहात्मकमितिश्रुतेः ॥ ततःकिमित्यतआह । तंजीवमिति ॥ असौमोहनशक्तिस्तं पूर्वोक्तंजीवंमोह यतिचिदानंदादिस्वरूपज्ञानरहितंकरोति ॥ ततोपिकिमित्यतआह । मोहा दिति ॥ मोहात्पूर्वोक्तादनीशतामिष्टानिष्टप्राप्तिपरिहारयोरसामर्थ्यंप्राप्यवपु षिमग्नः शरीरेतादात्म्याभिमानंगतः शोचति दुःखित्वाद्यभिमानंकरोति । स मानेवृक्षेपुरुषोनिमग्नोऽनीशयाशोचतिमुह्यमानइतिश्रुतेरित्यर्थः ॥ वक्ष्यम णसांकर्यपरिहारायवृत्तं निगमयति॥ईशेति॥समासतःसंक्षेपेणेत्यर्थः१२।१३

सप्तान्नब्राह्मणेद्वैतंजीवसृष्टंप्रपंचितम् ॥
अन्नानिसप्तज्ञानेनकर्मणाजनयत्पिता १४
मर्त्यान्नमेकंदेवान्नेद्वेपश्वन्नंचतुर्थकम् ॥
अन्नत्रितयमात्मार्थमन्नानांविनियोजनम् १५

ननुजीवस्यद्वैतस्रष्टृत्वेकिंमानमित्याशंक्याह ॥ सप्तान्नेति ॥ कथंतत्प्र पंचितमित्याशंक्यसप्तान्नशब्दवाच्यद्वैतसृष्टिप्रतिपादकं यत्सप्तान्नानिमेधया तपसाजनयत्पितेतिवाक्यमर्थतःसंगृह्णाति ॥ अन्नानीतिपितास्वादृष्टद्वारा गइत्पादनेनसर्वलोकपालकोजीवइत्यर्थः॥ नन्वत्रसप्तकसर्ज्जनंकिमर्थमित्या शंक्यतद्विनियोगोप्येकमस्यसाधारणं द्वेदेवानभाजयत्त्रीण्यात्मनेऽकुरुत

शुभ्यएकंप्रायच्छदितिवाक्येनोक्तइत्याह॥ मर्त्यान्नमिति॥ विनियोजनमु
क्तमितिशेषः १४। १५॥

व्रीह्यादिकंदर्शपूर्णं मासौक्षीरंतथामनः॥
वाक्प्राणश्चेतिसप्तत्वमन्नानामवगम्यताम् १६
ईशेनयद्यप्येतानि निर्मितानिस्वरूपतः॥
तथापिज्ञानकर्मभ्यां जीवोऽकार्षीतदन्नताम् १७

तानिचसप्तान्नानि एकमस्यसाधारणमितीदमेवास्य तत्साधारणमन्नंय
दिदमद्यतइत्यादिनाऽयमात्मावाङ्मयो मनोमयः प्राणमयइत्यंतेन वाक्य
संदर्भेणषन्यूनकंडिकाद्वयरूपेणदर्शितानीत्याह ॥ व्रीह्यादिकमिति॥ ननू
क्तसप्तान्नानांजगदंतः पातित्वनेश्वरनिर्मितत्वाज्जीवनिर्मितत्वाभिधानमयु
क्तमित्याशंक्यतत्स्वरूपस्येश्वरनिर्मितत्वेपि भोग्यत्वाकारस्य जीवनिर्मित
त्वान्मैवमित्याह॥ ईशेनेति॥ ज्ञानकर्मभ्यांज्ञानं विहितंप्रतिषिद्धंच देवताप
रयोषिदादिविषयंध्यानंकर्मचविहितं यज्ञादिरूपंप्रतिषिद्धं हिंसादिरूपंताभ्या
मित्यर्थः।तदन्नतांतेषांव्रीह्यादिप्राणांतानांस्वभोगोपकरणत्वमित्यर्थः१६।१७।

ईशकार्यंजीवभोग्यं जगद्द्वाभ्यांसमन्वितम्॥
पितृजन्याभर्तृभोग्या यथायोषितथेष्यताम् १८
मायावृत्त्यात्मकोहीश संकल्पःसाधनंजनौ॥
मनोवृत्त्यात्मकोजीव संकल्पोभोगसाधनम् १९
ईशनिर्मितमण्यादौ वस्तुन्येकविधेस्थिते॥
भोक्तृधीवृत्तिनानात्वा तद्भोगोबहुधेष्यते २०

किमुक्तंभवतीतितत्राह ईशकार्यमिति॥ जगत्सप्तान्नत्वेनोक्तं व्रीह्यादिरूप
मीशकार्यत्वेनजीवभोग्यत्वेनच द्वाभ्यां संबद्धमित्यर्थः॥ एकस्योभयसंबंधे
दृष्टांतमाह॥ पितृजन्येति॥ ईशजीवयोर्जगत्सर्ज्जने किंसाधनमित्यतआ
हमायेति॥ नन्वीश्वर सृष्टवस्तुस्वरूपातिरिक्तोभोग्यत्वाकार एवनास्तिको
जीवेनसृज्यत इत्याशंक्याह॥ ईशनिर्मितेति॥ एकस्मिन्नेव विषयेबहुविधो

भोगउपलभ्यमानस्तत्प्रयोजकं भोग्याकारभेदंगमयतीत्यर्थः १८।१६।२० ॥

हृष्यत्येकोमणिंलब्ध्वा क्रुध्यत्यन्योह्यलाभतः ॥
पश्यत्येवविरक्तोत्र नहृष्यतिनकुप्यति २१
प्रियोऽप्रियउपेक्ष्यश्चेत्याकारामणिगास्त्रयः ॥
सृष्टाजीवैरीशसृष्टं रूपंसाधारणंत्रिषु २२
भार्यास्नुषाननदाच यातामातेत्यनेकधा ॥
प्रतियोगिधियायोषिद्भिद्यतेनस्वरूपतः २३

ननुसतिभोगभेदेभोग्यभेदः कल्प्येतसएवनास्तीत्याशंक्य दृश्यमानत्वान्नैवमित्याह ॥ हृष्यतीति ॥ एकोमण्यर्थीतंलब्ध्वाहृष्यति अन्यस्तथाविधस्तदलाभात्क्रुध्यति अत्रमणौविषयेविरक्तस्तुतं मणिंपश्यत्येवलाभालाभ निमित्तकौहर्षक्रोधौनप्राप्नोतीत्यर्थः। केतेभोगभेदोपरक्ताजीव सृष्टाद्याकारभेदा इत्यतआह ॥ प्रियइति ॥ मणिनिष्ठाःप्रियत्वाप्रियत्वोपेक्ष्यत्वलक्षणाआकार भेदाजीवैः सृष्टास्त्रिष्वपि साधारणमनुस्यूतंयन्मणिरूपं तदीश्वरनिर्म्मितमित्यर्थः ॥ उक्तंजीवसृष्टाकारभेदउदाहरणांतरेणस्पष्टयति ॥ भार्येति ॥ ननांदा भर्तृभगिनीयाता देवरपत्नीप्रतियोगिधिया भर्तृश्वशुरादिलक्षणप्रतियोगिगोचरयाबुध्या तत्तदपेक्षयेत्यर्थः २१।२२।२३ ॥

नतुज्ञानानिभिद्यंतामाकारस्तुनभिद्यते ॥
योषिद्वपुष्यतिशयो नदृष्टोजीवनिर्मितः २४
मैवंमांसमयीयोषित्काचिदन्यामनोमयी ॥
मांसमय्याअभेदेपि भिद्यतेहिमनोमयी २५
भ्रांतिस्वप्नमनोराज्य स्मृतिष्वस्तुमनोमयम् ॥
जाग्रन्मानेनमेयस्य नमनोमयतेतिचेत् २६

ननुयोषिद्विषयाणिभार्यास्नुषेत्यादि ज्ञानान्येवभिन्नान्युपलभ्यन्तेनतु तद्विषयभूतायायोषितः स्वरूपेभेदोदृश्यतेऽतः प्रतियोगिधियायोषिद्भिद्यतइत्युक्तमयुक्तमितिशंकते। नन्विति ॥ ज्ञानवैलक्षण्यस्य ज्ञेयवैलक्षण्यात्विना भ-

त्वाज्ज्ञेयाकार भेदोंगीकार्यएवेत्याशयेनपरिहरति। मैवमिति॥ ननुभ्रांत्या दिस्थलेत्राह्य विषयाभावात्तत्र्त्यं वस्तुमनोमयमस्तुप्रमितिस्थलेन्तुतदनुपप न्नंवाह्यवस्तुनः सत्वादितिशंकते॥ भ्रांतीति॥ मानेनप्रत्यक्षादिप्रमाणेन मे यस्यप्रमेयस्येत्यर्थः २४। २५। २६॥

वाढंमानेतुमेयेनयोगात्स्याद्विषयाकृतिः॥
भाष्यवार्त्तिककाराभ्यामयमर्थउदीरितः २७
मूषासिक्तंयथाताम्रंतन्निभंजायतेतथा॥
रूपादीन्व्याप्नुवच्चित्तंतन्निभंदृश्यतेध्रुवम् २८

प्रमितिस्थलेवाह्यविषयसत्वमंगीकरोति॥ वाढमिति॥ कथंतर्हितद्विषयस्य मनोमयत्वमुच्यतइत्यतआह॥ मानेत्विति॥ मानेविषयाकृतिस्तुतस्यमेयेन योगात्संबंधात्स्यात्। नन्विदंस्वकपोलकल्पितमित्याशंक्याह॥ भाष्येति॥ तत्र तावद्भाष्यकारवचनमुदाहरति॥ मूषेति॥ यथाद्रुतंताम्रंमूषायांसिक्तं सत न्निभंजायते तत्समानाकारवद्भवति॥ तथा रूपादीन्विषयान्व्याप्नुवद्विषयी कुर्वच्चित्तंध्रुवमवश्यं तन्निभंदृश्यतउपलभ्यतइत्यर्थः २७। २८॥

व्यंजकोवायथाऽऽलोकोव्यंग्यस्याकारतामियात्॥
सर्वार्थव्यंजकत्वाद्धीरर्थाकाराप्रदृश्यते २९
मातुर्मानाभिनिष्पत्तिर्निष्पन्नंमेयमेतितत्॥
मेयाभिसंगतंतच्चमेयाभत्वंप्रपद्यते ३०

ननुताम्रादेरग्निसंपर्कात् द्रुतस्यमूषानिषिक्तस्य कठिनमूषाभिघातेनशै त्यापत्तौमूषाकारापत्तावपि बुद्धेरमूर्तायास्ताम्रादि विलक्षणायाविषयव्याप्तावपि कुतस्तदाकारापत्तिरित्याशंक्यदृष्टांतांतरमाह। व्यंजकइति॥ यथावाव्यं जकःप्रकाशकआलोक आतपादिर्व्यंग्यस्य प्रकाश्यस्यघटादेराकारतामा कारवतामियात्प्राप्नुयादेवंधीरपि सर्वार्थस्यव्यंजकत्वात्सकलपदार्थ प्रकाश कत्वादर्थाकाराऽर्थस्याकारइवाकारोयस्याःसातथाप्रदृश्यते प्रकर्षेणोपलभ्य तइत्यर्थः इदानींवार्त्तिककारवचनमाह॥ मातुरिति॥ मातुःसाभिषानबुद्धिस्थ

चिदाभासरूपात्प्रमातुर्मानाभिनिष्पत्तिर्मानस्यसाभासांतःकरणवृत्तिरूपस्या भिनिष्पत्तिरुत्पत्तिर्भवतीतिशेषः ॥ निष्पन्नमुत्पन्नं तन्मानंमेयंप्रमेयं घटा दिरूपमेतिप्राप्नोति किंचतन्मानंमेयाभिसंगतंप्रमेयेण संबद्धंसन्मेयाभत्वं मे यस्यआभेवाभायस्यतन्मेयाभंतस्य भावस्तत्वं मेयसमानाकारतां प्रपद्यते प्राप्नोतीत्यर्थः २९ । ३० ॥

सत्येवंविषयौद्वौस्तोघटौमृन्मयधीमयौ ॥
मृन्मयोमानमेयःस्यात्साक्षिभास्यस्तुधीमयः ३१
अन्वयव्यतिरेकाभ्यांधीमयोजीवबंधकृत् ॥
सत्यस्मिन्सुखदुःखेस्तस्तस्मिन्नसतिनद्वयम् ३२

भवत्वेवंप्रकृतेकिमायातमित्यतआह सत्येवमिति ननुमृन्मयघटस्येवमनो मयघटस्यतेनैवमनसा ग्रहीतुमशक्यत्वाद् ग्राहकांतराभावाच्चाऽसिद्धिरेवेत्या शंक्यग्राहकांतराभावोऽसिद्धइत्याह मृन्मयइति यथामृन्मयोमानमेयस्तथा धीमयः साक्षिभास्यइत्यर्थः भवत्वेवंद्विविधंद्वैतंअत्रकस्यहेयत्वंकस्यावानेति नज्ञायतेइत्याशंक्यजीवसृष्टस्यहेयत्वमित्यभिप्रेत्यतस्यबंधहेतुत्वंदर्शयति अ न्वयेति अन्वयव्यतिरेकावेवदर्शयति सत्यस्मिन्निति अस्मिन्जीवसृष्टेमानस प्रपंचेसति विद्यमानेसुखदुःखेस्तःभवतः असतितुतस्मिन्द्वयंसुखंदुःखंचना स्तीत्यर्थः ३१ । ३२ ॥

असत्यपिचबाह्यार्थेस्वप्नादौबध्यतेनरः ॥
समाधिसुप्तिमूर्च्छासुसत्यप्यस्मिन्नबध्यते ३३
दूरदेशंगतेपुत्रेजीवत्येवात्रतत्पिता ॥
विप्रलंभकवाक्येनमृतंमत्वाप्ररोदिति ३४
मृतेपितास्मिन्वार्तायामश्रुतायांनरोदिति ॥
अतःसर्वस्यजीवस्यबंधकृन्मानसंजगत् ३५
विज्ञानवादोबाह्यार्थवैयर्थ्यात्स्यादिहेतिचेत् ॥
नहृद्याकारमाधातुंबाह्यस्यापेक्षितत्वतः ३६

ननूक्तावन्वयव्यतिरेकौवाह्यार्थविषयौकिंनस्यातांइत्यतआह ॥ असत्यपि वेति ॥ नरोमनुष्यःएतदुपलक्षणमन्येषामपिस्वप्नादौस्वप्नस्मृत्यादिकालेवाह्यार्थेनुकूलेयोषिदादौप्रतिकूलेव्याघ्रादौचपारमार्थिके विषयेऽसत्यपिअविद्यमानेपिवध्यते सुखदुःखाभ्यांयुज्यते समाध्यादिषुत्वस्मिन्वाह्यार्थेसत्यपिनवध्यते नसुखदुःखादिभाग्भवत्यतस्तंद्विषयावन्वयव्यतिरेकौनस्तइत्यर्थः मनोमयप्रपंचस्यवंधकत्वेनान्वयव्यतिरेकावुदाहरणेनस्पष्टयति ॥ दूरदेशमितिसार्द्धेन ॥ देशांतरंप्राप्तेपुत्रेतत्रजीवत्येवसत्यत्र स्वगृहेस्थितस्तस्यपिताविप्रलंभकस्यमिथ्यावचनैः परवंचकस्य त्वत्पुत्रोमृतइत्येवं रूपेणवाक्येन स्वपुत्रंमृतंकल्पयित्वाअकर्णेणरोदनंकरोति तस्मिन्नेवपुत्रेतत्रैवमृतेपि तन्मृतिवार्त्तायामश्रुतायां सत्यां न रोदनंकरोति फलितमाह ॥ अतइति ॥ धीमयस्यैव जगतोवंधहेतुत्वांगीकारेवाह्यार्थपलापादपसिद्धांतापातःस्यादितिशंकते ॥ विज्ञानेति ॥ परिहरति ॥ नहृदीति ॥ यद्यपिमानसप्रपंचस्यैव बन्धहेतुत्वं तथापि तद्धेतुत्वेनवाह्यार्थस्यापि स्वीकारान्नविज्ञानवादप्रसंग इतिभावः ३३।३४।३५।३६ ॥

वैयर्थ्यमस्तुवावाह्यं नवारयितुमीश्महे ॥
प्रयोजनमपेक्षंते नमानानीतिहिस्थितिः ३७
वंधश्चेन्मानसंद्वैतं तद्धीरोधेनशाम्यति ॥
अभ्यसेद्योगमेवातो व्रह्मज्ञानेनकिंवद ३८

ननु न हृद्याकारसमर्प्पणाय वाह्यपदार्थोपेक्षणीयः पूर्वपूर्वमानसप्रपञ्चसंस्कारस्यैवोत्तरोत्तरमानसप्रपञ्चहेतुत्वोपपत्तेरित्याशंक्य प्रौढवादेनतदंगीकरोति। वैयर्थ्यमिति ॥ तर्हिविज्ञानवादात्को भेदइत्यतआह। वाह्यमिति ॥ विज्ञानवादिनोवाह्यार्थमेवापलयंति वयंनतथेत्ययमेवभेदइत्यर्थः। प्रयोजनशून्यत्वादभ्युपगमोप्ययुक्तएवेत्याशंक्याह ॥ प्रयोजनमिति ॥ प्रयोजनंनापेक्ष्यंतेकिंतुमानानि अपेक्ष्यंतइतिस्थितिः मानंचक्षुरादिप्रमाणं तदधीनाघटादीनांवस्तूनां सिद्धिरितिनियमः ननुप्रयोजनाधीनावस्तुसिद्धिः यथाघटादीनांसिद्धिरितिनियमः ननुप्रयोजनावस्तुसिद्धिः यदाघटादीनांप्रयोजनं तदा घटादीनांसिद्धिः प्रयोजनाभावे घटादीनांनसिद्धिःइतिनियमोनभवतीत्याशं

क्य मानाधीनावस्तुसिद्धिर्नप्रयोजनाधीनामानसिद्धस्य प्रयोजनशून्यत मात्रेणासत्त्वस्यलौकिकैर्वादिभिर्वाऽनभ्युपगमादितिभावः मानसद्वैतस्यैववंध हेतुत्वे तस्यमनोनिरोधात्मकयोगेनैव निवृत्तिसंभवाद्ब्रह्मज्ञानस्य वंधनिवर्त्त कत्वाभ्युपगमोविरुध्यतेतिशंकते । वंधश्चेदिति ३७ । ३८ ॥

तात्कालिकद्वैतशांतावप्यागामिजनिक्षयः ॥
ब्रह्मज्ञानंविनानस्यादितिवेदांतडिंडिमः ३९
अनिवृत्तेपीशसृष्टे द्वैतेतस्यमृषात्मताम् ॥
बुद्ध्वाब्रह्माद्वयंवोद्धुं शक्यंवस्त्वैक्यवादिना ४०
प्रलयेतन्निवृत्तौतु गुरुशास्त्राद्यभावतः ॥
विरोधिद्वैताभावेपि नशक्यंवोद्धुमद्वयम् ४१

योगेनकिंद्वैतोपशमस्तात्कालिक उच्यते आत्यंतिकोवेति विकल्प्यआ द्यमंगीकृत्यद्वितीयं दूषयति ॥ तात्कालिकेति ॥ ज्ञात्वादेवंमुच्यते सर्वपाशै ज्ञात्वाशिवंशांतिमत्यंतमेति ॥ यदाचर्मवदाकाशं वेष्टयिष्यंति मानवाः ॥ तदादेवमविज्ञाय दुःखस्यांतोभविष्यतीत्यादिश्रुतिष्वन्वयव्यतिरेकाभ्यां ब्रह्म ज्ञानादेववंधनिवृत्तिरभिधीयतइतिभावः ॥ ननुवाह्यद्वैतनिवृत्तिमंतरेणाऽद्वि तीयब्रह्मज्ञानमेवनोदीयादित्याशंक्य तन्निवारणाभावेपि तस्यमिथ्यात्वज्ञा नादेवपारमार्थिकमद्वैतंवोद्धुंशक्यतइत्याह ॥ अनिवृत्तेपीति नद्वैतमृषात्व ज्ञानमद्वैतज्ञानप्रयोजकमपितु तन्निवारणमेवेत्यभिनिवेशमानं प्रत्याह ॥ प्र लयइति ॥ प्रलयेप्रलयावस्थायां तन्निवृत्तौतस्य द्वैतस्यनिवृत्तौसत्यांतुवि रोधिद्वैताभावेप्यद्वैतज्ञानविरोधित्वेन भवदभिमतस्यद्वैतस्य निवारणेसत्यपि गुरुशास्त्राद्यभावतः गुरुशास्त्रादिरूपस्य ज्ञानसाधनस्याभावाद्वैतोरद्वयंवस्तु वोद्धुंशक्यंनभवति अतस्तन्निवारणमप्रयोजकमितिभावः ३९ । ४० । ४१ ॥

अवाधकंसाधकंच द्वैतमीश्वरनिर्मितम् ॥
अपनेतुमशक्यंचेत्यास्तांतद्द्विष्यतेकुतः ४२
जीवद्वैतंतुशास्त्रीयमशास्त्रीयमितिद्विधा ॥

उपाददीतशास्त्रीयमातत्वस्यावबोधनात् ४३
आत्मब्रह्मविचाराख्यं शास्त्रीयंमानसंजगत्॥
बुद्धेतत्वेतच्चहेयमितिश्रुत्यनुशासनम् ४४

तथापिसतिद्वैतेकथमद्वैतज्ञानमित्याशंक्याह॥ अबाधकमिति॥ ईश्वरनिर्मितद्वैतमबाधकं तन्मृषात्वज्ञानेनैवाद्वैतज्ञानोत्पत्तेरुक्तत्वात्साधकंच गुरुशास्त्रादिरूपस्य तस्यज्ञानसाधनत्वादाकाशादिरूपं द्वैतमस्माभिरपनेतुमशक्यं चेतिहेतोस्तद्द्वैतमास्तां कुतःकारणाद्द्विष्यतइत्यर्थः॥ इदानींजीवसृष्टंद्वैतं विभजते॥ जीवेति॥ किंद्विविधमपिसदाहेयमेवनेत्याह॥ उपाददीतेति॥ आतत्वस्याववोधनात् तत्वस्याववोधनपर्यंतमित्यर्थः॥ किंतच्छास्त्रीयंद्वैतमित्याकांक्षायामाह॥ आत्मेति॥ प्रत्यग्रूपस्यब्रह्मणोविचाराख्यंयच्छ्रवणादिकं तच्छास्त्रीयं मानसंजगदित्यर्थः नन्वातत्वस्याववोधनादित्युक्तमनुपपन्नंआसुप्तेरामृतेकालं नयेद्वेदांतचिंतयेत्युक्तत्वादित्याशंक्याह॥ बुद्धइतितत्वेब्रह्मात्मैक्यलक्षणे साक्षात्कृतेसतीत्यर्थः ४२।४३।४४॥

शास्त्राण्यधीत्यमेधावी अभ्यस्यचपुनःपुनः॥
परमंब्रह्मविज्ञाय उल्कावत्तान्यथोत्सृजेत् ४५
ग्रंथमभ्यस्यमेधावी ज्ञानविज्ञानतत्परः॥
पलालमिवधान्यार्थीत्यजेद्ग्रंथमशेषतः ४६
तमेवधीरोविज्ञाय प्रज्ञांकुर्वीतब्राह्मणः॥
नानुध्यायाद्बहूञ्छब्दान्वाचोविग्लापनंहितत् ४७
तमेवैकंविजानीथह्यन्यावाचोविमुंचथ॥
यच्छेद्वाङ्मनसीप्राज्ञ इत्याद्याःश्रुतयःस्फुटाः ४८

तर्हिआसुप्तेरितिवाक्यस्य कागतिरितिचेत्तद्यात्रावसरं किंचित्कामादीनां मनागपीतिपूर्वार्द्धे कामाद्यवसरप्रदानस्य निषिद्धत्वात्तत्परत्वेवेतिवदामः अतोनकाप्यनुपपत्तिरितिभावः तत्ववोधोत्तरकालंतद्धेयत्वप्रतिपादनपराश्रुतीरुदाहरति॥ शास्त्राणीति॥ तमेवैकंविजानीतेत्यनेनतमेवैकंजानथआत्मा

